स्तुत्वा यानमनुत्तरं निरुपमं संसारसन्तारकं
यत् पुण्यं प्रचितं विसारि विमलं तुङ्गं[1] मया निश्चलम् ।
सर्वस्तेन जनः[2] प्रयातु चपलं संप्राप्य यानाधिपं
निर्वाणं विरजः पुरोत्तमवरं बुद्धो यथा सर्ववित् ॥८॥

आर्यं चन्द्रप्रदीपं[3] दशबलवृषभैर्यैरिदं सूत्रराजं
संख्यातीतैः प्रगीतं[4] श्रुतिहृदयपरिप्रीणनं [5]जन्मभाजाम् ।
सम्पद्भिः[6] सन्निगूढं बहुभिरपमलश्लाघिनीभिः सदैव
ह्याविन्यस्तात्मभावः प्रणतिमुपगतस्तानहं भक्तिनम्रः[7] ॥९॥

वर्णौघं यस्य वक्तुं मुनिवरवृषभा अप्युपायान्ति[8] सादं
सर्वज्ञे यावबोधप्रशमिततमसोऽप्यप्रमेयं[9] सदैव ।
आर्यं चन्द्रप्रदीपं दशबलगदिताशेषसूत्राधिराजं[10]
तं*भक्त्यम्भोभरात्मा[11] क्षितिनिहितशिराः सर्वकालं नमामि ॥१०॥

येनानन्तसहस्रकल्पनयुतानारागिता नायका
यश्च ज्ञानविशेषधर्म उदितश्चन्द्रो यथा निर्मलः ।
तं चन्द्रप्रभनिष्प्रपञ्चमतुलं* संवर्णितं नायकै-
र्वन्दे सर्वसमाधिधर्मकुशलमार्यं सदा भक्तितः ॥११॥

1 A विमलमुत्तुङ्गम्
2 B जतः
3 A आर्यचन्द्र०
4 A & B प्रगीतैः
5 B ह्यात्मभाजाम्
6 B स सद्भिस्-सन्निगूढ० A बहुनिरुपमश्लाघनीभिः
7 A ०ह्नम्रम्
8 B मुनिवरवृषभात्सन्युपायान्ति
9 A सर्वज्ञेयावबोधप्रशमिततपसोऽप्यप्रमेयः
10 A ०सूत्रो निर्मलः
* * These four lines are dropped in A.
11 Ms. भक्त्यांभरोन्मा·

स्तुत्वा धर्मस्वभावां दशबलजननीं सर्वबुद्धांश्च वीरान्
आर्यं चन्द्रप्रभं च जिनवरतनयं सर्वदेवाभिवन्द्यम्[1] ।
पुण्यं प्राप्तं मया यत् स्थिरगगनसमं तेन [2]लोकस्त्वशेषो
लाभी भूयात्[3]समाधेः [4]सततमखिलपः शाक्यसिंहो यथैव ॥१२॥
समस्तसुगतोद्गीर्णसर्वसूत्राधिराजतः ।
आर्यचन्द्रप्रदीपाद्धि यथालब्धं[5] ब्रवीम्यहम्[6] ॥१३॥
आयान्तु देवमनुजाः सद्धर्मजातगौरवाः ।
दुर्लभं श्रवणं ह्यस्य कल्पकोटिशतैरपि[7] ॥१४॥

1 A ०देवाधिवन्द्यम्  2 A लोकश्च शेषः

3 A यया  4 Mss. ०खिलया  5 B पर्यालब्धं

6 In the Tibetan version these verses are omitted altogether.

7 Verses 13 & 14 appear in Ms. B only. Ms. A adds here some verses, which are reproduced in the footnotes of the following pages without any emendation:

विधूय निद्रांस्तु भविष्पभूतं श्रद्धा समुपाद्य तपोषधर्मे ।
निर्वाणनिम्बैर्विषदैत्मनोभिर्विज्ञापना मे प्रयताश्शृणोध्वम् ॥
यद् दुर्लभं कल्पशतैरनेकैर्मानुष्यसत्त्वणदोषे हि तम् ।
तत् साम्प्रतं प्राप्तमतो भवद्भिः कार्यो हि धर्मश्रवणोपयश्च ॥
यस्माच्च लोके करुणात्मिकानां निर्वाणमार्गोत्तमदेशिकानाम् ।
सुदुर्लभं जन्म तथागतानाम् अतोऽपि धर्मश्रवणं निषेव्य ॥
यस्माच्च नैकव्यसनोघतेऽध्वानभाजनं धर्मकथाश्रुतस्य ।
भवन्ति श्रद्धान्नरकेषु तस्मादयं स धर्मश्रवणस्य कालः ॥
तीर्यक्षुधान्यान्यभयात्तुगम्यामसम्भवः श्रोतुमिहार्यधर्मम् ।
तथैव लोकान्तरिकासु तस्मादयं स धर्मश्रवणस्य कालः ॥
क्षुत्तर्षदुःखाकुलचेतसश्च यस्मान्नराः प्रेतगतौच्चमग्नाः ।
श्रोतुं सभ्याः सुगतस्य वाक्य अयं सद् धर्मश्रवणस्य कालः ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसङ्घेन सार्धं परिपूर्णेन भिक्षुनियुतशत-

निर्याणन् स धर्मं प्राप्य सहेन्द्रलोकं प्रमाददोष इलिताश्च यस्मात् ।
न कुर्वते धर्मविधौ प्रयत्नमयं स धर्मश्रवणस्य कालः ॥
प्राप्त यावत् सकलेन्द्रियत्वमिदं च चित्तं कुशलानुकूलम् ।
याव धर्मः सुरतः पृथिव्यामयं स धर्मश्रवणस्य कालः ॥
जरातुपार प्रकारणा यावन्न दह्यते यावत् पद्मषण्डो ।
कार्यक्षमं यावदिदं च मालमयं स धर्मश्रवणस्य कालः ॥
आरोग्य सम्पाभ्युदयश्च यावन्न शोभ्यते व्याधिमहाश्मवृष्ट्या ।
यावच्च कायेष्वनुयातबुद्धिरयं स धर्मश्रवणस्य कालः ॥
यावत् प्रियो जीवितपूर्णचन्द्रो न पीयते मृत्युमहाग्रहेण ।
तावद्धे कार्ये कुरुताप्रमादमयं स धर्मश्रवणस्य कालः ॥
सर्वानुकम्पा प्रतिजातयश्चा यावच्च लोके सुगतस्य शिष्याः ।
तिष्ठन्ति धर्माभ्युदयाय तावदयं स धर्मश्रवणस्य कालः ॥
यावच्च निर्वाणपुरानुयायी मार्गः पूर्वजिनानुयातः ।
प्रकाश्यते लोकहिताय तावदयं स धर्मश्रवणस्य कालः ॥
यावच्च सर्वज्ञदिवाकरस्य वागंशवो मोहतमोऽसिभिर्वा ।
धर्मावभासं जनयन्ति लोकेष्वयं स धर्मश्रवणस्य कालः ॥
तस्मात् कुकार्यं क्षपयाय सर्वं मत्वा स्वकार्यं परमार्थधर्मम् ।
श्रोतव्य एव प्रयतेन धर्मो यस्मादतः सर्वत्या भवन्ति ॥
अष्टाक्षणक्षोभविमुक्तदोषमिमं क्षणं प्राप्य नरेण तस्मात् ।
सत्कृत्य धर्मश्रवणं निषेव्यं पथ्यं सुभैषज्यमिवातुरेण ॥
तस्मादुदारगुणरत्ननिधानभूतामेतत् महाधकरुणादर गौरोभ्याम् ।
शव्यं मुनीन्द्रवचनं निसृतेन्द्रियोश्चैतातोधिकं श्रवणतोवनीयमस्मिन् ॥
वियदिव विपुलोत्तमांवकासं पदनुपमैः स्वगुणोदयैः प्रकाशम् ।
श्रृणोत तदखिलं विहाय मानं दशबलयानमिदं निगद्यमानम् ॥
श्वाङ्गान् तत्कृत्य जन्मप्रमुदितहृदयो यश्चकारां सुजां
स्वाङ्गादेव प्रदीतं रुधिरमधिमपि तत् वध्रजीवप्रकाशम् ।

सहस्रेण। अशीत्या च बोधिसत्त्वनियुतैः सार्धं सर्वैरेकजातिप्रति-
बद्धैरभिज्ञाभिज्ञातैर्दशदिग्-लोकधातुसन्निपतितैर्धारणीसूत्रान्तगति-

संविद्यास्थिश्च देहासितरजतनिभां लेखनीयश्च चक्रे
प्रागवध्वसूक्ष्म हेतोः स किल मुनिबलः सूत्रमेतज्जगाद ॥
महाकृपाङ्गार मनङ्गत सर्वकृत् खरम्रसां कामलवातहासित ।
नुनं मुखान्निःपतितं रुजा वाक् सकृत् च्छ्रणोच्चवचः मामृतं वरम् ॥
महायानस्य यो मार्गः सम्बुद्धैर्यत्र देशितः ।
हेतुदृष्ट्या तु संयुक्तं तत्सूत्रं श्रूयतामिह ॥
आयान्तु देवमनुजाः सद्धर्मजातगौरवाः ।
दुर्लभं श्रवणं ह्यस्य कल्पकोटिशतैरपि ॥
आयान्तु देवभुजगासुरकिन्नरेन्द्रा
यक्षादयः प्रवरधर्मकृताधिकाराः ।
बौद्धं वचः प्रसमसौख्यनिमित्तमेतत्
प्रकाश्यत इह श्रवणाय तस्य ॥
गगनतलगताश्च ये च दिग्भ्यो धरणितले सलिले च ये वसन्ति ।
असुरः सुरमहोरगाश्च दैत्ययक्षास्त्वरितमुपेत्य निशामयन्तु सूत्रम् ॥
यदसुलभमेतत् कल्पकोटिः प्रसरशतैरपि हेतुवर्जितानाम् ।
भवतु हि न जिन्नात् करस्मि भूत तदिदमहं प्रविवक्षुरप्रयातम् ॥
भवत तदवधूय बालतां जिनवचनश्रवणोत्सुकाः ।
सदा उभयमिदमतीव दुर्लभं जिनवचनश्च मनुष्यजन्म च ।
गम्भीरश्च न चान्यस्त दुर्लभश्च मुनेर्वचः ।
न च तेन विना मोक्षस्तस्माच्छ्रोतमादरात् ॥
अवितथवचनं मुनौ प्रकाशं भगवति शास्तरि सन्निवेश्य भक्तिम् ।
शृणोत सुगतसूत्रमादरेण व्यसनविनाशकरं तदेव यस्मात् ॥
अथ पादरजोपमागिरिनदिवेगोपमायौवनं
माचव्यं जलबिन्दुलोलचपल फेनोपमजीवितम् ।

गतैः सर्वसत्त्वधर्मदानसन्तोषकै[1]र्महाभिज्ञाज्ञानोदाहारकुशलैः सर्वपारमितापरमपारमिताप्राप्तैः सर्वबोधिसत्त्वसमाधिसमापत्ति-व्यवस्थानज्ञानकुशलैः [2]सर्वबुद्धस्तुतस्तोमितप्रशस्तैः सर्वबुद्धक्षेत्र-व्याक्रमणकुशलैः सर्वमारसन्त्रासन-ज्ञानकुशलैः [3]सर्वधर्मयथावज्-ज्ञानकुशलैः [4]सर्वसत्त्वेन्द्रियपरापरज्ञानकुशलैः बुद्धसर्वकर्मपूजा-समादानप्रज्ञानकुशलैः[5] सर्वलोकधर्मानुपलिप्तैः[6] कायवाक्-चित्तसमलंकृतैः महामैत्रीमहाकरुणासन्नाहसन्नद्धैः महावीर्या-सङ्ख्येयकल्पापरिक्षीणमानसैः महासिंहनादनादिभिः सर्वपर-प्रवादानभिभूतैः[7] अवैवर्तिकमुद्रामुद्रितैः सर्वबुद्धधर्माभिषेकप्राप्तैः। तद्यथा मेरुणा च नाम बोधिसत्त्वेन महासत्त्वेन। सुमेरुणा च।

धर्मयान करोति निश्चितं अभिसङ्गलाघाटेना
पश्चातापहता जगपरिणता शोकाग्निना दह्यते ।।
चलापि भूतिः क्षणभङ्गयौवनं
कृताहृदन्तन्तरतदवन्ति जीवितम् ।
अहो नृणां विस्मयकारि चेष्टितम् ।।

1 B. ०सन्तापकैः० Tib. ཆོས་པར་ བྱེད་པ །

2 A & B ०सर्वबुद्धस्तुतस्तवित० 3 A drops it.

4 A & B सर्वस्वत्वे ; Tib. སེམས་ ཅན་ ཐམས་ ཅད་ ཀྱི་ དབང་ པོ །

5 A & B समुदान० ; A ०परज्ञान० Tib. སངས་རྒྱས་ཐམས་ཅད་ལ་མཆོད་པའི་ལས་ཡང་ དག་པར་བླངས་པ་ཤེས་པ་ལམ་མཁས་པ །

6 A सर्वधर्माबुद्धलिप्तैः 7 A & B ०प्रवाद्यानभिभूतैः

महामेरुणा च । मेरुशिखरन्धिरेण च । मेरुप्रदीपराजेन च । मेरुकूटेन च । मेरुध्वजेन च । मेरुराजेन[1] च । मेरुशिखरे [2]संघट्टनराजेन च । [3]मेरुस्वरेण च । मेघराजेन च । दुन्दुभिस्वरेण च । रत्नपाणिना च । रत्नाकरेण च । रत्नकेतुना च । रत्नशिखरेण च । रत्नसम्भवेन च । [4]रत्नप्रभासेन च । रत्नयष्टिना च । रत्नमुद्राहस्तेन च । रत्नव्यूहेन च । रत्नजालिना च । रत्नप्रभेण च । रत्नद्वीपेन च । रतिंकरेण च । धर्मव्यूहेन च । व्यूहराजेन[5] च । लक्षणसमलंकृतेन च । स्वरव्यूहेन च । स्वरविशुद्धिप्रभेण च । रत्नकूटेन च । रत्नचूडेन च । दशशतरश्मिकृतार्च्चिषा[6] ज्योतिरसेन च । चन्द्रभानुना च । सहचित्तोत्पादधर्मचक्रप्रवर्तिना च । शुभकनकविशुद्धिप्रभेण च । [7]सततमभयददा ०मभयंददानेन च [8]नाम बोधिसत्त्वेन महासत्त्वेन । अजितबोधिसत्त्वपूर्वंगमैश्च[9] सर्वैर्भद्रकल्पिकैर्बोधिसत्त्वैर्महासत्त्वैः । मञ्जुश्रीपूर्वंगमैश्च षष्टिभिरनुपमचित्तैः । भद्रपालपूर्वंगमैश्च [10]षोडशभिः सत्पुरुषैः । चतुर्महाराजपूर्वंगमैश्च

1 B drops it.

2 A संघट्टनराजेन Tib. ལྷུན་པོའི་རྩེ་ཀུན་གཡོ་བར་བྱེད་པའི་རྒྱལ་པོ །

3 A drops it. Tib. ལྷུན་པོའི་ དབྱངས །

4 A drops it.

5 Ms. व्यूहराज्ञा च

6 B ०हूतार्च्चिषा च A ०कृतार्च्चिषा च see Tib. ཉི་མ་མེའི་ འོད་ འཕྲོ་ཅ །

7 A दशशतं अभयन्ददाने च ; B ०भयददा ; Tib. སྟོགས་ པ །

8 Tib. ཁྱུ་ མཆོག་ ཏུ་ གྱུར་པ །

9 A स बोधि०

10 B षोडशवर्षाभिः सत्०

चातुर्महाराजकायिकैर्देवपुत्रैः। पेयालम्। यावद् [1]ब्रह्मपूर्वंगमैश्च ब्रह्मकायिकैर्देवपुत्रैस्तदन्यैश्च [2]महेशाख्यमहेशाख्यैरुदारोदारैर्देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यैर्भगवान्[3] सत्कृतो गुरुकृतो मानितः पूजितोऽर्चितोऽपचायितश्चतसृणामपि [ पर्षदां सदेवकस्य लोकस्य ] वन्दनीयः पूजनीयो नमस्करणीयः[4]। तत्र खलु भगवाननेकशतसहस्रया पर्षदा परिवृतः पुरस्कृतो धर्मं देशयति स्म। आदौ कल्याणं मध्ये [ कल्याणं पर्यवसाने कल्याणं ] स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं [ संप्रकाशयति स्म। तेन खलु पुनः ] समयेन तस्मिन्नेव पर्षत्सन्निपाते चन्द्रप्रभो नाम कुमारभूतः [ सन्निपतितोऽभूत् सन्निषण्णः ] पूर्वजिनकृताधिकारोऽवरोपितकुशलमूलो जातिस्मरो लब्धप्रतिभानो महायान[सम्प्रस्थितो महाकरुणाभियुक्तः। ] अथ खलु चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं प्रावृत्य[5] दक्षिणं जानु[मण्डलं पृथिव्यां प्रतिष्ठाप्य ] येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। पृच्छेयमहं भगवन्तं [तथागतमर्हन्तं सम्यक्]संबुद्धं कञ्चिदेव प्रदेशं सचेन्मे भगवानवकाशं कुर्यात् पृष्टप्रश्नव्याकरणाय। [[6]एवमुक्ते भगवान् चन्द्रप्रभ]कुमारभूतमामन्त्रयते स्म। पृच्छ त्वं [कुमारभूत[7]] तथागतमर्हन्तं सम्यक्संबुद्धं [यद्

1 B ब्रह्मंगमैश्च

2 A महेशाख्यै०

3 The text up to this word is missing in the Gilgit ms. The words placed henceforth within brackets are also missing in the Gilgit ms.

4 A & B पूजनीयः सत्करणीयो गुरुकरणीयो माननीयोऽर्चनीयोऽपचायनीयः

5 A & B कृत्वा

6 A स एव०

7 A & B ०भूतमेतदवोचत्

यदेव [1]काङ्क्षसि। अहं तस्य] तस्यैव प्रश्नस्य पृष्टस्य [2]व्याकरणेन चित्तमाराधयिष्यामि। सर्वज्ञोऽस्मि सम्यक्संबुद्धः [कुमार सर्वदर्शी] सर्वधर्मबलवैशारद्यवृषभतामनुप्राप्तोऽनावरणविमोक्ष[ज्ञानसमन्वागतः। नास्ति] कुमार तथागतस्य सर्वधर्मेष्वज्ञातं[3] वा अदृष्टं वा अश्रुतं वा अविदितं[4] वा [असाक्षात्कृतं वा [5]अनभिसम्बुद्धं] वा अनन्तापर्यन्तेषु लोकधातुषु। नित्यकृतस्ते कुमार अवकाशो[6] भवतु [तथागतं प्रश्नपरिपृच्छनाय।] अहं ते तस्य तस्यैव प्रश्नस्य पृष्टस्य व्याकरणेन चित्तमाराधयिष्यामि।

अथ खलु चन्द्रप्रभः कुमारभूतस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तस्यां वेलायां भगवन्तं [गाथाभिरध्यभाषत।

कथं चरन्तः] संबुद्ध लोकनाथ प्रभङ्कर।
लभतेऽचिन्तियं ज्ञानं व्याकुरुष्व हितंकर ॥१५॥
कथं [चरन्तु नरेन्द्र सत्यवादि
नरवृषभ] नरदेवपूजनीय।
अतुलियु वरु [7]लब्धमग्रयाणं
गिरवर पृष्ट [वियाकुरुष्व नाथ[8] ॥१६॥

1 A काङ्क्षस्य तस्यैव 2 A व्याकरणैव
3 A & B किञ्चिदज्ञातं 4 A drops it. 5 B drops it.
6 A & B कुमारभूतो भगवता कृतावकाशो; Tib. follows A & B.
7 A लब्धग्रयाणां
8 Tib. མདོན་པོ་གསུང་མཆོག་ཞུས་པ་ལུང་བསྟན་གསོལ།

अध्याशयेन] पृच्छामि [1]शाठ्यं मम न विद्यते ।
साक्षी[2] न कश्चिदन्यो मे अन्यत्न पुरुषोत्तमात् ॥१७॥
[विपुल प्रणिधि मह्यमस्ति छन्द-
श्चरिय] प्रजानसि[3] मह्यं शाक्यसिंह ।
न च अहं वचनवित्तको[4] भविष्ये
लघु [प्रतिपत्ति भणाहि मे नरेन्द्र ॥१८॥
कतरा [5]हारका] धर्मा बुद्धयाने बहुङ्कराः ।
व्याकुरुष्व महावीर सर्वधर्माण पारग ॥१९॥
[[5]उपकरे धर्म मम ब्रूहि नाथ
यथ] [6]नरु निषेवत भोति तीक्ष्णप्रज्ञः ।
अपगतभयभैरवो अत्रस्तो[7] न च
[परित्यागु करोति शीलस्कन्धात्] ।
[8]व्यपगतमदरागदोषमोह-
श्चरति च चारिकः [9]सर्वशान्तदोषः ॥२०॥[10]

1 A साद्यो B साध्यं ; Tib. གཡོ ། 2 Tib. དཔང །

3 B चर्यय जानसि

4 A चिन्तको भविष्ये ; see Tib. བདག་ནི་ཚིག་ལ་གཏོད་འཛིན་མ་ལགས་ཀྱིས །

5 B हारका धर्मा See Tib. ཡོངས་སུ་སྤྱོད་པའི་ཆོས་རྣམས་གང །

5 B उपकर मम ब्रूहि धर्मनाथा 6 A नरु सेवितु ; B नरु निषेचन्द्रभाभि

7 A & B अत्रस्थान Tib. མི་སྐྲག་པས ། 8 A अपगत०

9 B चारिकशान्तदोषः

10 A only inserts here भवति च गगनं यथास्य कायः । प्रमृतिप्रहार याति सर्वधर्माः ॥ Tib. also omits this line.

कथं न [त्यजते शीलं कथं ध्यानं न रिञ्चति] ।
कथं निर्वर्तते रागं कथं [1]प्रज्ञा प्रवर्तते ॥२१॥
कथं दशबलशासने उदारे
अभिरति [विन्दति शीलं रक्षमाणः ।
कथं] भवति अच्छिद्रु शीलस्कन्धः
कथञ्च तुलेति स्वभावु संस्कृतस्य ॥२२॥
कथं कायेन [वाचा परिशुद्धो भोति[2] पण्डितः] ।
असंक्लिष्टेन[3] चित्तेन बुद्धज्ञानं निर्वर्तते[4] ॥२३॥
कथं भवति विशुद्धकायकर्मा
कथञ्च विवर्जित [भोन्ति वाचदोषाः ।
कथं ] भवति असंक्लिष्टचित्तः
पुरुषवर मम पृष्टं व्याकुरुष्व[5] ॥२४॥

अथ खलु[6] भगवांश्चन्द्रप्रभं [कुमारभूतमेतदवोचत्] । एकधर्मेण कुमार समन्वागतो बोधिसत्त्वो महासत्त्व एतान् गुणान् [प्रतिलभते क्षिप्रं चानुत्तरां सम्यक्संबोधिम]भिसंबुध्यते । [7]कतमेनैकधर्मेण । इह कुमार बोधिसत्त्वो महासत्त्वः सर्वसत्त्वेषु समचित्तो

1 B प्रज्ञाय वर्धति　　2 B वाचाय विशुद्धो भोति
3 C ०क्लिष्टः　　4 A & B गवेषते
5 A & B ०ष्वेति　　6 A & B एवमुक्ते
7 A कतमेन कुमारैकधर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वः एतान् गुणान् प्रतिलभते । क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते । यदुत सर्वसत्त्वेषु समचित्तो भवति ।

[भवति हितचित्तो]ऽप्रतिहतचित्तोऽविषमचित्तः। अनेन कुमार एकधर्मेण समन्वागतो बोधिसत्त्वो महासत्त्व एतान् गुणान्[1] प्रतिलभते क्षिप्रं चानुत्तरां सम्यक् संबोधिमभिसंबुध्यते।

अथ खलु भगवां[स्तस्यां वेलायां चन्द्रप्रभं कुमारभूतं] [2]गाथाभिरध्यभाषत।

एकधर्मं समादाय बोधिसत्त्वो य वर्तते[3]।
एतान् गुणान् [स[4] लभते क्षिप्रं बोधिं च बुध्यते] ॥२५॥
न च कश्चि[5] प्रतिहन्यतेऽस्य चित्तम्
[6]अप्रतिहतचित्तु यो भोति बोधिसत्त्वः।
न च [खिलु जनयति न प्रदोषं[7]
लभति] यथा परिकीर्तितान् विशेषान् ॥२६॥
समं चित्तं निषेवित्वा विपाको दर्शितः समः।
[समाः पादतला भोन्ति समश्चाचारगोचरः] ॥२७॥
सममविषमचित्तु भावयित्वा
अपगतदोषखिलः प्रहीणकाङ्क्षः।

1 C धर्मान् for एतान् गुणान्
2 B गाथाभिगीतेन प्रत्यभाषत
3 A ०सत्तो पवर्तते Cf. Tib. བྱང་ཆུབ་སེམས་དཔའ་གང་གནས་པ།
4 B सर्वं लभते
5 A & B क्वचित्
6 A ०चिन्त यो ; B ०चिन्त या भोति
7 A न च खलु जनयति न प्रयाति प्रदोषं Tib. ཐ་བ་མི་སྐྱེད་ཞེ་སྡང་མེད་པ་དག། ཁྱད་པར་ཇི་སྐད་བརྗོད་པ་ཐོབ་པར་འགྱུར།

चरण[वरतला: समास्य भोन्ति
परम]प्रभास्वर शुद्धदर्शनीयः ॥२८॥
[1]दशदिशित विरोचि बोधिसत्त्वः
स्फुरति शिरीय प्रभाय बुद्ध[क्षेत्रम् ।
यद भवति स लब्धु शान्तभूमि[2] ]
तद बहुसत्त्व स्थपेति बुद्धज्ञाने ॥२९॥

तत्र कुमार सर्वसत्त्वेषु समचित्तो बोधिसत्त्वो महासत्त्वो [हितचित्तोऽप्रतिहतचित्तोऽविषमचित्त इमं] सर्वधर्मस्वभावसमता[3]-विपञ्चितं नाम समाधिं प्रतिलभते। [4]कतमश्च स कुमार [5]सर्वधर्मस्वभाव-समता[विपञ्चितो नाम] समाधिः। यदुत काय-संवरः। वाक्संवरः। मनःसंवरः। कर्मपरिशुद्धिः। आलम्बन[समति-क्रमः। स्कन्धपरिज्ञा। धातुसमता]। आयतनापकर्षः। तृष्णाप्रहाणम्। अनुत्पादसाक्षात्क्रियावतारः। हेतुदीपना। [कर्मफलाविप्रणाशः। धर्मदर्शनम्।] मार्गभावना। तथागतसमवधानम्। तीक्ष्णप्रज्ञता। सत्यानुप्रवेशः[6]। धर्मज्ञानम्। [[7]प्रतिसंविदवतारज्ञानम्। अक्षर]पद-प्रभेदज्ञानम्। वस्तूनां समतिक्रमः। घोषपरिज्ञा[8]। प्रामोद्यप्रति-

1 B दशदिशत विरोचि०
2 Tib. ནམ་ ངེས་ཞི་བའི་ནི་ཐོབ་པའི་ཚེ །
3 B ०विपञ्चितसमाधिनाम प्रति० 4 A कतमश्च कुमार
5 A सर्वधर्मस्वभावसमता०
6 A & C सत्यानुप्रवेशज्ञानम् ; Tib. བདེན་པའི་ རྗེས་སུ་ འཇུག་པ་དང །
7 B ०संविदवतारः 8 C adds धातुसमता

लाभः। [ धर्मप्रीत्यनुभवनता। आर्जवता ]। मार्दवता। ऋजुकता[1]। अकुटिलता। विगतभृकुटिता[2]। सुरतता। [सुशीलता। साखिल्यम्। माधुर्यम्। स्मितमुखता। पूर्वाभिलापिता]। एहीति स्वागतवादिता। अनालस्यम्। गुरुगौरवता। गुरुशुश्रूषा। [उपपत्तिसंतुष्टिः]। शुक्लधर्मातृप्तता। आजीवविशुद्धिः। अरण्यवासानुत्सर्गः। भूमिव्यवस्थानज्ञानम्। स्मृते[रविप्रणाशः। स्कन्धकौशल्यम्[3]। धातु]कौशल्यम्। आयतनकौशल्यम्। अभिज्ञासाक्षात्क्रियावतारः। क्लेशापकर्षणम्। [ वासनानुसन्धिसमुद्घातः। [4]ज्ञानविशेषगामिता। ] भावनानिष्यन्दः। आपत्तिव्युत्थानकौशल्यम्। पर्युत्थानविष्कम्भणम्। अनुशयप्रहाणम्। [ भवसमतिक्रमः। [5]जातिस्मरता। ] निष्काङ्क्षता। कर्मविपाके धर्मचित्तता। [6]श्रुतपर्येष्टिज्ञानतीक्ष्णता। [[7]ज्ञानतृष्णा। ज्ञानानुबोधः। [8]आजानेयभूमिः। शैलोपमचित्तता। अकम्प्यता। अचलता। अविनिवर्तनीयभूमिव्यवस्थानज्ञानम्[9]। [ कुशलधर्मनिष्यन्दः। पापधर्मजुगुप्सनता ]। असमुदाचारता[10] क्लेशानाम्। शिक्षाया अपरित्यागः।

1 A & B add अशठता।

2 A विगतभृकुटिता साखिल्यम्। See Tib. བྲམས་པར་ འཛིན་པ་དང །

3 A ०कौशल्यम्। आयतन०

4 B विशेषगामिता

5 B जातिस्मरणता

6 A श्रुतपर्येष्टिज्ञानतृष्णा

7 A drops it.

8 A अनुनयभूमिः

9 B वचनप्रतिसन्धिज्ञानम्

10 B अनवलीनता चित्तस्य

समाधिव्यवस्थानम् । आशयज्ञानम् । [सत्त्वेषूपपत्तिविशेषज्ञानम्[1] । समताज्ञानम् । ] वचनप्रतिसन्धिज्ञानम्[2] । गृहावासपरित्यागः । त्रैधातुकेऽनभिरतिः । अनवलीनचित्तता[3] । [धर्मेष्वनभिनिवेशः । सद्धर्म]परिग्रहः । धर्मगुप्तिः । कर्मविपाकप्रत्ययनता । विनयकौशल्यम् । अधिकरण[व्युपशमः । अविग्रहः[4] । अविवादः । क्षान्तिभूमिः । क्षान्तिसमा]दानम् । गतिसमता । धर्मप्रविचयकौशल्यम् । प्रव्रज्याचित्तम्[5] । धर्मविनिश्चयकौशल्यम् । [धर्मपदप्रभेदज्ञानम् । धर्मपदाभिनिर्हार]कौशल्यम्[6] । अर्थानर्थसम्भेदपदनिर्हारकौशल्यज्ञानम्[7] । पूर्वान्तज्ञानम् । अपरान्तज्ञानम्[8] । [प्रत्युत्पन्नज्ञानम् । त्र्यध्वसमताज्ञानम्] । त्रिमण्डलपरिशुद्धिज्ञानम् । कायावस्थानज्ञानम् । चित्तावस्थानज्ञानम् । ईर्यापथरक्षणम्[9] । ईर्यापथविकोपनम् । ईर्यापथविकल्पनम्[10] । ईर्यापथप्रासादिकता । अर्थानर्थकौशल्यज्ञानम् । युक्तभाणिता । लोकज्ञता । मुक्तत्यागिता । [प्रततपाणिता । अनवगृहीत]चित्तता । ह्रीव्यपत्रपिता । अकुशलचित्तजुगुप्सनता । धूतगुणानुत्सर्गः । चारित्र[समादानम् । प्रियसमुदाचारता[11]] । गुरूणां प्रत्युत्थानासनप्रदानता[12] । माननिग्रहः । चित्तसंप्रग्रहः[13] । चित्तसमुत्[पादज्ञानम् । अर्थ]प्रतिवेधज्ञानम् ।

1 Tib. 7 b. l. 4 omits उपपत्ति
2 A वचनसन्धिज्ञानम्
3 B अनवलीनता चित्तस्य
4 B drops it.
5 A & B as also Tib. 7b, last line drop it.
6 A & B ०कौशलज्ञानम्
7 Tib. 8a, l. 1 omits it.
8 A पूर्वान्तापरान्तज्ञानम्
9 A ०रक्षणाविकोपनम्
10 A drops it.
11 B ०चारिता
12 B ०नानुप्रदानता ; C प्रत्युत्थाय आस०
13 A चित्तसंग्रहः ; C चित्तस्य संप्रग्रहणम्

ज्ञानप्रतिवेधज्ञानम्[1] । ज्ञानानुबोधः । अज्ञानविगमः । चित्त-प्रवेशज्ञानम्[2] । चित्त[स्वभावानुबोधज्ञानम्[3] । आहारनिर्हार]कौशल्य-ज्ञानम् । सर्वरुतज्ञानम्[4] । निरुक्तिव्यवस्थानज्ञानम् । अर्थ-विनिश्चयज्ञानम् । अनर्थ[विवर्जनम् । सत्]पुरुषसमवधानम् । सत्पुरुषसंसेवनता[5] । कापुरुषविवर्जनम् । ध्यानानां निष्पादनम् । तत्र चाना[स्वादनम् । अभिज्ञाविकुर्वणम् । नामसं]केतप्रज्ञप्ति-[6]स्वभावावतारज्ञानम् । प्रज्ञप्तिसमुद्घातः । संस्कारेषु निर्वेदः । सत्कारेष्व[नभिलाषः । असत्कारेषूपेक्षा[7] । लाभे]ऽनर्थिकता । अलाभेऽनवलीनता । यशस्यनभिलाषः । अयशस्यप्रतिघः । प्रशं-[सायामननुनयः[8] । निन्दायामविषादः] । सुखेऽनभिष्वङ्गः । दुःखे-ऽवैमुख्यम्[9] । संस्काराणामनादानता । भूत[वर्णेऽसङ्गः[10] । अभूत-वर्णेऽधिवासनता[11]] । गृहस्थप्रव्रजितैरसंस्तवः । अगोचरविवर्ज-

1 A & B drop it.

2 Tib. 8a སྒྲུབ་པ་ དང་ངེས་པར་སྒྲུབ་པ་ལ་མཁས་པའི་ཤེས་པ །

3 A ०ज्ञानम् । ज्ञानाधिगमः । चित्त०

4 A ०रुतरवित०

5 A & B as also Tib. drop it.

6 A & B ०प्रज्ञप्तिः स्वभावा०

7 Mss. संस्कार० ; Tib. 8b, l. 3: བཀུར་སྟི=सत्कार

8 Tib. 8b. l. 4: བསྟོད་པ་ལ་དགའ་བ་མེད་པ །

9 B सुखेष्वनभिष्वङ्गः । दुःखेष्ववैमुख्यम्

10 A भुते वर्णे० ; Tib 8b, l. 5: བསྔགས་པ་ ཡང་དག་པ་ལ་མ་ཆགས་པ །

11 A अभूते वर्णे० ; Tib. 8b, l. 6: བསྔགས་པ་ ཡང་དག་པ་མ་ཡིན་པ་ལ་མི་མཇེད་པ །

नम्। गोचरप्रचारः[1] । आचार[सम्पत्। अनाचारविवर्जनता[2] । कुलाना]मदूषणता[3] । शासनस्यारक्षणता। अल्पभाषणता[4] । मितभाषणता[5] । प्रति[वचनकौशल्यम्। प्रत्यर्थिकनिग्रहः। कालप्रति]क्रमणता। अकालविवर्जनता[6] । पृथग्जनेष्वविश्वासः। दुःखितानामपरिभवनता। तेभ्यश्च [धनप्रदानम्। दरिद्राणामनवसादनता]। दुःशीलेष्वनुकम्पा। हितवस्तुता। कृपाबुद्धिता। धर्मेणानुग्रहः। आमिष[परित्यागः। असञ्चयस्थापिता]। शीलप्रशंसनता[7] । दौःशील्यकुत्सनता[8] । शीलवतामशाठ्यसेवनता[9] । सर्वस्व[परित्यागिता। अध्याशयनिम]न्त्रणता[10] । यथोक्तकारिता। अभीक्ष्णप्रयोगिता। सत्कृत्य प्रीत्यनुभवनता[11] । [दृष्टान्तज्ञानम्। पूर्वयोगकौशल्यम्[12]]। कुशलमूलपूर्वङ्गमता[13] । उपायकौशल्यम्। निमित्तप्रहाणम्। [संज्ञा]विवर्तः[14] । वस्तूनां परिज्ञा। सूत्रान्ताभि-

1 A ०प्रचरः

2 A & B ०र्जनता। मार्दवता।

3 B कुशलानाम०

4 B & C अल्पभाष्यता

5 A ०भाषणता। मन्दमन्त्रणता। प्रति०; B ०भाष्यता। मन्दमन्त्रणता। प्रति०; C मार्दवता। मितव्ययता। प्रति० Cf. Tib. 8b-9a, l. 1: དམ་གྱིས་སྨྲ་བ་དང་ཚིག་གི་ལན་སླན་པ་ལ་མཁས་པ།

6 A as also Tib. drop it.

7 C ०ना

8 C ०ना

9 A ०मत्यध्यास०; B ०मध्यास०; C ०सेवना; Tib. 9a, l. 4: ཚུལ་ཁྲིམས་དང་ལྡན་པ་ལ་གཡོ་མེད་པར་བསྟེན་པ།

10 C ०त्रहता Tib. 9a, l. 4: ལྷག་པའི་བསམ་པས་གཉེར་པ།

11 A ०कृत्य प्रतीत्यनु०

12 A ०योगज्ञानकौशल्यम्

13 B ०पूर्वङ्गमनता

14 C संज्ञापरिवर्तः

निर्हारः। विनयकौशल्यम्। सत्यविनिश्चयः। विमुक्ति[साक्षात्क्रियावतारः। एकांशवचन]प्रव्याहरता[1]। यथावज्ज्ञानदर्शनानुत्सर्जनम्[2]। [3]निष्काङ्क्षवचनता। शून्यताया आसे[वनता। अनिमित्तनिषेवणता। अप्र]णिहितस्वभावोपलक्षणता। वैशारद्यप्रतिलम्भः। ज्ञानेनावभासः। शीलदृढता। [समापत्त्यवतारः। प्रज्ञाप्रतिलम्भः[4]]। एकारामता। आत्मज्ञता[5]। अल्पज्ञानता। सन्तुष्टिः। चित्तस्यानाविलता। दृष्टिकृतविवर्जनता[6]। [धारणीप्रतिलम्भः[7]। ज्ञानावतारः]। स्थानास्थानप्रस्थानप्रतिपत्तिज्ञानम्। हेतुयुक्तिनयद्वारम्। कारणम्। मार्गः[8]। [प्रतिपत्तिः। सन्देशः। अववादः]। अनुशासनी। चर्या। आनुलोमिकी क्षान्तिः। क्षान्तिभूमिः। अक्षान्तिविगमः। ज्ञानभूमिः। [अज्ञानप्रहाणम्। ज्ञानप्रतिष्ठानम्। योगाचार]भूमिः। बोधिसत्त्वगोचरः। सत्पुरुषसेवना। असत्पुरुषविवर्जना[9]। [सर्वधर्मस्वभावानुबोधप्रतिवेधज्ञानम्]। तथा-

1 B ०प्रत्याहरणता　　2 C यथावज्ञानदर्शनानु०

3 Tib. 9a, l. 1: ཉེས་ནུར་མེད་པའི་ཚིག །

4 B ०प्रतिलाभः ; Tib. omits it.　　5 B ०मता प्रतिष्ठान० आत्मज्ञता अल्प०

6 A ०विवर्जनम् ; C ०विवर्जना　　7 B ०प्रतिलाभः

8 B हेतुयुक्तिनयद्वारणां मार्गं० ; C स्थानावस्थानप्रतिपत्तिहेतुः युक्तिः नयः द्वारं मार्गभूम ; Cf. Tib. 9b, l. 3-4: གནས་དང་ གནས་མ་ ཡིན་པ་དང་ ། འཇུག་པ་དང་སྒྲུབ་པ་ ཞེས་པ་དང་ གཏན་ཚིགས་་དང་ ། རིགས་པ་དང་ཚུལ་དང་ སྒོ་དང་ལམ་དང་ ཉན་དན་དང་སྒྲུབ་པ་དང་ཕྲིན་དང་ གདམས་པ་དང་ བསྟན་པ་ལ་སྦྱོར་པ་དང་ །

9 A ०विवर्जनता ; C ०परिवर्जना

गतेनाख्याता बुद्धभूमिः। पण्डितैरनुमोदिता। बालैः प्रतिक्षिप्ता। दुर्विज्ञेया [श्रावकैः। आज्ञाता प्रत्येकबुद्धैः। अभूमि]स्तीर्थिकानाम्। बोधिसत्त्वैः परिगृहीता। दशबलैरनुबुद्धा। देवैः पूजनीया। [ब्रह्मणा वन्दनीया। शक्रैरधिगम]नीया। नागैर्नमस्करणीया। यक्षैरनुमोदनीया। किन्नरैः स्तोतव्या। महोरगैः [प्रशंसनीया। बोधिसत्त्वैर्भा]वनीया। पण्डितैः पर्यवाप्तव्या। धनमनुत्तरम्। दानं निरामिषम्। भैषज्यं ग्लाना[नाम्। मोदिता[1] शान्तचित्तानाम्। कोशो ज्ञानस्य। अक्षयः प्र]तिभानस्य[2]। नयः सूत्रान्तानाम्। विगमः[3] कोशस्य[3]। विषयः शूराणाम्। परिज्ञा त्रैधातु[कस्य। कोलः पारगामिनाम्[4]। नौरोघ]मध्यगतानाम्। कीर्त्तिर्यशस्कामानाम्[5]। वर्णो बुद्धानाम्। प्रशंसा[6] तथागतानाम्। स्तवो द[शबलानाम्[7]। गुणो बोधिसत्त्वानाम्। उपेक्षा] कारुणिकानाम्। मैत्री दोषं शमयितुकामानाम्[8]। मुदिता प्रशान्तचारिणाम्[9]। आश्वासो [महायानिकानाम्। प्रतिपत्तिः सिंहनादना]दिनाम्। मार्गो बुद्धज्ञानस्य। मोक्षः सर्वसत्त्वानाम्[10]। मुद्रा सर्वधर्माणाम्। आहारिका[11] सर्वज्ञानस्य[12]। [उद्यानं सर्वबोधिसत्त्वानाम्[13]।

1 B म्रदिता
2 A & B ०तिभानम्
3 A & B as also Tib. drop it
4 A पारमितानाम्
5 C ०स्कर्मणाम्
6 A यशस्तथा०
7 A बलो दश०
8 B ०कामानाम्। मुदिता प्रशान्तविगमः शोकस्य चित्तानाम् आश्वासो०
9 A & B drop it.
10 A & B drop it
11 B आहारिकः
12 C ०ज्ञानाम्
13 B बोधिसत्त्वानाम्

वित्रासनं] मारसेनायाः। विद्या क्षेमगामिनाम्। अर्थः सिद्धार्थानाम्। परित्राणममित्रमध्यगतानाम्[1]। [प्रत्यर्थिकनिग्रहः] सह धर्मेण। सत्याकरो वैशारद्यानाम्। भूते पर्येष्टिर्बालानाम्[2]। पूर्वनिमित्तमष्टादशानामावेणिकानां[3] [बुद्धधर्माणाम्। अलङ्कारो धर्मकायस्य]। निष्यन्दश्चर्यायाः। आभरणं बुद्धपुत्राणाम्। रतिर्मोक्षकामानाम्। प्रीतिर्ज्येष्ठपुत्राणाम्। [परिपूरिर्बुद्धज्ञानस्य। अभूमिः सर्वश्रा]वकप्रत्येकबुद्धानाम्। विशुद्धिश्चित्तस्य। परिशुद्धिः[4] कायस्य। परिनिष्पत्तिर्विमोक्ष[मुखानाम्। असंक्लेशो बुद्धज्ञानस्य। अना]गमो रागस्य। विगमो द्वेषस्य[5]। अभूमिर्मोहस्य। आगमो ज्ञानस्य। उत्पादो [विद्यायाः। प्रहाणमविद्यायाः। तृप्तिर्विमुक्तिसा]राणाम्। तुष्टिः समाधिसाराणाम्। चक्षुर्द्रष्टुकामानाम्। अभि[ज्ञा विकुर्वितुकामानाम्। ऋद्धिरभिनि]र्हर्तुकामानाम्। धारणी श्रुतार्थिकानाम्[6]। स्मृतेरसंप्रमोषः। अधिष्ठानं बुद्धानाम्। [उपायकौशल्यं नायकानाम्] सूक्ष्मं दुर्विज्ञेयमनभियुक्तानाम्। अज्ञेयममुक्तैः। विवर्ताक्षराणां[7]

1 C बालममित्रमध्यगत   2 C ॰वर्णानाम्

3 B अनिमित्तम॰   C पूर्वनिमित्तमावेणिकानां

4 C परिपूरिः   5 C दोषस्य   6 A & B ॰कामानाम्

7 This reading is based on Tib. 11a, l. 4: མི་བརྗོད་པ་རྣམས་ཀྱི་ ཕྲ་བ་དང་ ཤེས་པར་དཀའ་བ་དང་ མ་གྲོལ་བ་དག་གིས་མི་ཤེས་པ་དང་། ཡི་གེ་རྣམས་ལྡོག་པ་དང་ཕྲ་ཤེས་པར་དཀའ་བ་དང་། A has ॰मनभियुक्तै र्दुराजानता विवर्णोऽक्षराणाम्। B सूक्ष्मं दुर्विज्ञेयमयुक्तै र्दुराज्ञानतः विवर्णोऽ॰ ; C दुर्विज्ञेयमयुक्तैः विवर्ताक्षराणाम् अर्थप्रतिवेधज्ञानं प्रज्ञानम्।

दुर्विज्ञेयं घोषेण। आज्ञातं विज्ञैः। ज्ञातं सूरतैः। प्रतिविद्ध-मल्पेच्छैः। उद्गृहीत[मारब्धवीर्यैः। धृतं स्मृतिमद्भिः। क्षयो] दुःखस्य। अनुत्पादः सर्वधर्माणाम्। [1]एकनयनिर्देशः सर्वभव-गत्युपपत्त्यायतनानाम्। [अयं स कुमार उच्यते सर्वधर्मस्व]भाव-समताविपञ्चितो नाम समाधिः। अस्मिन् खलु पुनः सर्वधर्म-पर्याये [2]समाधिनिर्देशे भगवता [भाष्यमाणे अशीतेर्नयुतानां देव-]मानुषिकायाः प्रजायाः पूर्वपरिकर्मकृताया अनुत्पत्तिकेषु धर्मेषु क्षान्तेः प्रतिलम्भोऽभूत्। [षण्णवतेश्च नयुतानामानु]लोमिकायाः क्षान्तेः प्रतिलम्भोऽभूत्। त्रिणवते[3]र्नयुतानां घोषानुगायाः क्षान्तेः प्रतिलम्भो[ऽभूत्। परिपूर्णस्य भिक्षुशतसहस्रस्या]नुपादाया-स्रवेभ्यश्चित्तानि विमुक्तानि। षष्टेश्च प्राणिशतसहस्राणां देव-मानुषिकायाः प्रजाया विरजो विगतमलं धर्मेषु ] [4]धर्मचक्षु-र्विशुद्धम्। अशीतेश्च भिक्षूणां सहस्राणामनुपादायास्रवेभ्य-श्चि[त्तानि विमुक्तानि। पञ्चभिश्चोपासकशतै]रनागामिफलं प्राप्तम्। षष्ट्या चोपासिकाशतैः सकृदागामिफलं प्राप्तम्। [अयञ्च त्रिसाहस्रमहासाहस्रो लोक]धातुः षड्विकारं कम्पितः प्रकम्पितः सम्प्रकम्पितः। चलितः प्रचलितः सम्प्रच[लितः। वेधितः प्रवेधितः सम्प्रवेधितः]। क्षुभितः प्रक्षुभितः सम्प्रक्षुभितः। रणितः प्ररणितः सम्प्ररणितः। गर्जितः प्रग[र्जितः सम्प्रगर्जितः। पूर्वा दिगवनमति पश्चिमा दिगुन्नमति। पश्चिमा दिगवनमति पूर्वा

1 C एकनिर्देशः 2 A & B सर्वधर्मस्वभावसमताविपञ्चिते समाधिनिर्देशे
3 A ०र्नवतीनां 4 B drops धर्म०

दिगुन्नमति। उत्तरा दिगव]नमति दक्षिणा दिगुन्नमति। दक्षिणा दिगवनमति उत्तरा दिगुन्नमति। अन्तादवनमति [मध्यादुन्नमति]। अन्तादुन्नमति [ मध्यादवनमति ]। [1]अप्रमेयस्य चावभासस्य लोके प्रादुर्भावोऽभूत्। [सर्वश्च लोकधातुः सदेवकश्च समारकः सब्रह्मकः सश्रमणब्राह्मणिकायाः प्रजायास्तेनावभासेनावभासिताः स्फुटा अभूवन्। इमौ च चन्द्रसूर्यौ एवं महर्द्धिकौ एवं महानुभावौ एवं महेशाख्यौ न भासतो न तपतो न विरोचतः]। या अपि लोकान्तरिका अन्धकारतमिस्रास्ता अपि तेनावभासेन स्फुटा अभूवन्। येऽपि तासूपपन्नाः सत्त्वास्तेऽप्यन्योन्यं संजानते स्म। एवं चाहुरन्योऽपि किल भो अयं सत्त्व इहोपपन्नः। यावदवीचेर्महानरकादिति।

इति श्रीसमाधिराजे निदानपरिवर्तो नाम[2] प्रथमः ॥१॥

1 C अप्रमेयस्य चावभासस्य लोके प्रादुर्भावोऽभूत्। या अपि ता लोक...कारतमिस्रायाश्विमो चन्द्रमसूर्यावेवं महानुभावौ वैवं म...शाख्या आभयान्याभां...अनेनापि दर्शनमाभां नानुभवन्तौ तास्वपि तस्मिन् सममये महतोऽवभासस्य प्रादु...स्तेऽप्यन्योन्यं संजानते स्म। अन्यः किलायं भोः सत्त्व उत्पन्नः यावदवीचेर्महानरकात्। Tib. 12a, omits the words within brackets.

2 A सर्वधर्मस्वभावसमतायाः समाधेः निदानपरिवर्तः प्रथमः।

# द्वितीयपरिवर्तः

[1]अथ खलु भगवांस्तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य एतदेव पूर्वयोगपरिवर्तं भूयस्या मात्रया गाथाभिर्गीतेन विस्तरेण संप्रकाशयति स्म[2]।

1 The following text is found in Mss. A & B. as also in Tibetan 12a ff.

तत्र खलु भगवांश्चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म। अप्रमेयासंख्येयाः कुमार तथागतार्हन्तः सम्यक्संबुद्धाः पूर्वं बोधिसत्त्वचर्यां चरता चक्रवर्त्तिराजभूतेन इमं समाधिमाकांक्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन इहैव गृध्रकूटे पर्वते—स्मराम्यहम् अनेकानि कल्पकोटिनियुतशतसहस्राणि—ये मया सत्कृता गुरुकृता मानिताः पूजिता अर्चिता अपचायिताः सर्वरत्नपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तूर्यताडावचरैर्वैजयन्तीभिरनेकैश्च चित्रविचित्रैर्नानारत्नमयविहारकोटीनियुतशतसहस्रव्यूहैः। तेषां च कुमार सर्वेषां तथागतानामन्तिकादयं सर्वधर्मस्वभावसमताविपञ्चितसमाधिर्विस्तरेण श्रुत्वा उद्गृहीतः पृष्टो धारितो वाचितः प्रवर्तितः अरणाभावनया भावितो बहुलीकृतः परेभ्यश्च विस्तरेण सम्प्रकाशितः। तेषाञ्च कुमार तथागतानां सर्वपश्चिमकः शालेन्द्रराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धोऽभूत्। तस्य च कुमार शालेन्द्रराजस्य तथागतस्याशीतिनियुतशतसहस्राणि श्रावकाणां बोधिसत्त्वानां च सङ्घोऽभूत्। षट्सप्ततिश्चास्य वर्षकोटीसहस्राण्यायुःप्रमाणमासीत्। तस्य च शालेन्द्रराजस्य मे कुमार तथागतस्यार्हतः सम्यक्संबुद्धस्याष्टादशवर्षकोटीसहस्राणि महापूजोपस्थानं कृतम्। दिव्यचन्दनमयानां रत्नमयानाञ्च विहाराणां कोटी कारिता। तस्य च भगवतः शालेन्द्रराजस्य कुमार तथागतस्यार्हतः सम्यक्संबुद्धस्य षट्सप्ततिवर्षकोटीसहस्राण्यायुःप्रमाणमभूत्। तस्यैव च भगवतः शालेन्द्रराजस्यान्तिकादयं मया प्रव्रजित्वा सर्वधर्मस्वभावसमताविपञ्चितः समाधिर्विस्तरेण चतुर्दशवर्षकोटीसहस्राणि श्रुत्वोद्गृहीतः पृष्टो धारितो वाचितः प्रवर्तितः अरणाभावनया भावितो बहुलीकृतः परेभ्यश्च विस्तरेण संप्रकाशितः। तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म। तस्मात्तर्हि कुमार इमं समाधिमाकाङ्क्षता क्षिप्रञ्चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन त्वया मयेव सर्वतथागतपूजोपस्थानपरिचर्यास्वभियुक्तेन भवितव्यम्। तत् कस्य हेतोः। सर्वतथागतपूजोपस्थानपरिचर्यानिष्यन्दा हि कुमार बोधिसत्त्वानां महासत्त्वानां न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः। किमङ्गः पुनरयं समाधिः। तस्मात्तर्हि कुमार सर्वतथागतपूजोपस्थानपरिचर्यास्वपरिखिन्नमानसेन ते सदा भवितव्यम्।

2 C अथ...अभाषत; Cf. Tib. 13b. l. 4

स्मरमि[1] दशबलान षष्टिकोटी[2]
पुरिमभवे[3] निवसिंसु[4] गृध्रकूटे ।
[पूरि मम चरमाणु बोधिचर्या]-
मिम वर शान्त समाधि देशयिंसु[5] ॥१॥
तेषां पश्चिमको आसील्लोकनाथः प्र[भङ्करः ।
शालेन्द्रराजनामेन स मया] परिपृच्छितः ॥२॥
अहञ्च क्षत्रियो आसं[6] राजश्रेष्ठो महीपतिः ।
मम चो[7] शतपुत्रा[णां पञ्चाभूवन्ननूनकाः ॥३॥
कोटी मया विहा]राणां तस्य बुद्धस्य कारिता ।
चन्दनस्य विशिष्टस्य केचिद्रत्नमया अभूत्[8] ॥४॥
प्रियो [मनापश्च बहुजनस्य
भीष्मोत्तरो नाम[9]] अभूषि राजा ।
अकार्षि[10] बुद्धस्य विशिष्टपूजा
अष्टादशवर्षसहस्रकोट्यः ॥५॥
[जिनस्य तस्य द्विपदोत्तमस्य
शालेन्द्रराजस्य] विनायकस्य ।

1 A & B स्मरामि
2 C ०कोट्यो:
3 Tib. 13b, l. 5 : སྔོན་ཚེ །
4 B निवसंसु
5 A बोधिचर्यासिसचरशान्तसमाधिदेशयेत्सु
6 C आसी
7 A मे तथा
8 B ०मयामभूत्
9 B भीष्मोन्तशूरो नाम
10 B अकासि

षट्सप्ततिवर्षसहस्रकोटियो[1]
आयुस्तदा आसि अनिन्दितस्य ॥६॥
[नियुतान्यशीतिसहस्र श्रावकाणां]
त्रैविद्यषडभिज्ञ जितेन्द्रियाणाम् ।
क्षीणास्रवाणा न्तिमदेहधारिणां
सङ्घस्तदा आसि [नरोत्तमस्य ॥७॥
बहुप्रकारा मयि] तस्य पूजा
कृता जिनस्य द्विपदोत्तमस्य ।
अर्थाय लोकस्य सदेवकस्य
इमं समाधिं [प्रतिकाङ्क्षता सदा ॥८॥
सपुत्रदारेण[2] मि प्रव्रजित्वा[3]
शालेन्द्रराजस्य जिनस्य अन्तिके ।
चतुर्दशवर्षसहस्रकोटियो
अयं [समाधिः परिपृच्छितो मया] ॥९॥
अशीति गाथा नियुता सहस्रा-
ण्यन्ये च कोटीशत विस्तराणाम्[4] ।
तस्योद्गृहीतः सुगतस्य अन्तिका-[5]
दितः समाधेः परिवर्त एषः[6] ॥१०॥

1 A ०कोट्यो
2 B drops the words between बहु and प्रव्रजित्वा
3 C म प्रव्रजित्वा
4 A & C विम्बराणाम्
5 B & C मेन्तिका०
6 B एकः

हस्ता [शिरा भार्य तथैव पुत्रा
रत्नं प्रभूतं तथ खाद्यभोज्यम् ।
न किञ्चि द्रव्यं मि न त्यक्तपूर्वम्
इमं [समाधिं प्रतिकाङ्क्षता वरम् ॥११॥
स्मरामि] बुद्धान सहस्रकोटियो
तदुत्तरे यत्तिक गङ्गवालुकाः[1] ।
ये हि स्थिहित्वा इह गृध्रकूटे
[अयं समाधिर्वरु शान्त देशितः[2]] ॥१२॥
सर्वे च शाक्यर्षभनामधेयाः
सर्वेषु चो[3] राहुल नाम पुत्राः ।
आनन्दनामा[4] परिचारकाश्च
[कपिलाह्वयाः प्रव्रजिताश्च सर्वे] ॥१३॥
अग्रे युगं कोलितशारिपुत्रा
समनाम[5] सर्वे च अभूषि तायिनः[6] ।
सम[नामिका[7] चो[8] तद लोकधातुः
सर्वेऽपि चोत्पन्न] कषायकाले ॥१४॥

1 B ततोत्तरे यान्ति जगङ्ग० ; C ततोत्तरे यान्तिक गङ्ग०

2 B ०वैरुखान्तदेशितः

3 A सर्वेषं च

4 B आनन्द नाना

5 B सह नाम

6 B तापियः ; Tib. 13b, l. 4 : སྐྱོབ་པ་ཀུན་ཀྱང་མཚན་ནི་མཐུན་པར་གྱུར །

7 A सहस्रनामिकां ; B & C सहनामिका ; Cf. Tib. 14b, l. 5 : མིང་འདྲ་སྟེ །

8 A च

सर्वे मया सत्कृत ते नरेन्द्रा
इमां चरन्तेन मि बोधिचारिकाम् ।
[यावन्ति चो[1] काचि जिनान पूजा
सर्वा कृता[2]] एतु समाधिमेषता[3] ॥१५॥
प्रतिपत्तिय एष समाधि लभ्यते[4]
बहुप्रकारा [प्रतिपत्तिरुक्ता[5] ।
गुणेषु सर्वेषु प्रतिष्ठितस्य[6]]
न दुर्लभस्तस्य समाधिरेषः॥१६॥
[7]रसष्वगृध्रस्य अलोलुपस्य
कुलेष्वसक्तस्य अनीर्षुकस्य ।
[मैत्रीविहारिस्य अमत्सरस्य[8]
न दुर्लभस्तस्य] समाधिरेषः ॥१७॥
सत्कारलाभेषु[9] अनर्थिकस्य
आजीवशुद्धस्य अकिञ्चनस्य ।

1 A यावन्ति च 2 B समकृता

3 Tib. 14b, l. 5-6 : ཏིང་ངེ་འཛིན་འདི་ནི་ ཡོངས་སུ་འཚོལ་ བདི་ཆེ། རྒྱལ་ལ་མཆོད་པ་མ་བྱས་ཅི་ཡང་མེད ॥

4 A प्रतिपत्तिजोष समाधि ; B लभते

5 A प्रतिपत्ति युक्ता 6 A प्रतिस्थितस्य

7 B writes again रसेष्वगृद्धस्य अलोलुपस्य । सत्कार०

8 B मैत्राविहारिस्य अक्रोधनस्य A & C ०विहारस्य

9 Tib. 15a, l. 1: རྙེད་དང་ བཀུར་སྟི་ དག་ཀུང་ །

विशुद्धशीलस्य [विशारदस्य

न दुर्लभस्तस्य] समाधिरेषः ॥१८॥

आरब्धवीर्यस्य अतन्द्रितस्य

रण्याधिमुक्तस्य[1] धुते स्थितस्य ।

नैरात्म्यक्षान्तीय प्रतिष्ठितस्य[2]

न दुर्लभस्तस्य समाधिरेषः ॥१९॥

सुदान्तचित्तस्य अनुद्धतस्य

ईर्याय चर्याय प्रतिष्ठितस्य[3] ।

त्यागाधिमुक्तस्य[4] [अमतसरस्य]

न दुर्लभस्तस्य समाधिरेषः ॥२०॥

अनुव्यञ्जनलक्षणा बुद्धधर्मा

येऽष्टादशो कीर्तित नायकेन ।

बला[विशारद्य न तस्य दुर्लभा

धारेति यः] शान्तमिमं समाधिम् ॥२१॥

बुद्धेन ये चक्षुष दृष्टु सत्त्वा-

स्त एककालस्मि भवेयु बुद्धाः[5] ।

तेषैक [एकस्य भवेयुरायुः[6]

अचिन्तिया कल्प]सहस्रकोटियः ॥२२॥

1 A अरण्यवासस्य ; B अरण्यवासिस्य

2 A प्रतिस्थितस्य ; B नैरात्म्यक्षान्तिये

3 A पर्याय प्रतिस्थितस्य

4 B त्यागाभियुक्तस्य

5 A ०दुष्टसत्त्वास्ते एकस्मिन् भवेषु बुद्धाः ; C भवेय बुद्धाः

6 A भवेयुरयं अचिन्तिया कल्पसहस्रकोटयः

तेषैक एकस्य शिरो भवेयुः
सर्वु समुद्रेषु यथैव वालुकाः[1] ।
यावन्ति ते सर्व शिरो भवेयुः
[शिरे शिरे जिह्व भवेयु तात्तिकाः] ॥२३॥
ते तस्य सर्वे भणि आनुशंसा
यो गाथ धारेय्य इतः समाधितः ।
न किञ्चिमात्तं परिकीर्तितं [भवेत्
किं वा पुनर्यो हि शिक्षित्व धारये ॥२४॥
धूतान्] समादाय गुणांश्च वर्तते
स्पृहेन्ति[2] देवासुरयक्षगुह्यकाः ।
राजान भोन्ति [अनुयात्रु[3] तस्य
धारेति यः शान्त समाधि दुर्लभम्[4]] ॥२५।
परिगृहीतो भवति जिनेभि-
र्देवाश्च नागाः सद आनुयात्ताः ।
प्रत्यर्थिकास्तस्य[5] [श्रिय नो सहन्ति[6]
धारेति यः शान्त समाधि] दुर्लभम् ॥२६॥
अनन्तु तस्य प्रतिभानु भोति[7]
अनन्त सूत्रान्त सहस्र भाषते ।

1 A अचिन्तिया कल्पसहस्रकोटयः । सर्वैः समुद्रेषु यथैव वालुकाः

2 A स्पृशन्ति

3 A अनुयात्र

4 A & B दुर्द्दशम्

5 B प्रत्यर्थिकात्म्य०

6 A प्रियमावहन्ति ; Tib. 15 b. 1. 4: ཕས་ཀྱི་རྒོལ་བས་དེ་ཡི་ གཟི་མི་བཟོད །

7 B भोन्ति

न तस्य विघ्ना[नु[1] कदाचि भोति[2]
धारेति यः शान्तमिमं] समाधिम् ॥२७॥
द्रक्ष्यन्ति बुद्धममिताभुनायकं
सुखावतीं चाप्यथ लोकधातुम् ।
ये पश्चिमे कालि [महाभयानके
समाधि श्रुत्वा इमु धारयेयुः] ॥२८॥
प्रकाशयित्वा इमु आनुशंसा
अध्येषते शास्तु स्वयं[3] स्वयंभूः ।
परिनिर्वृ[तस्य मम पश्चिकाले[4]
समाधि धारेथ इमं] विशुद्धम् ॥२९॥
ये केचि बुद्धा दशसु दिशासु
अतीतकालेऽपि च प्रत्युत्पन्नाः[5] ।
सर्वे जिना [अत्र समाधिशिक्षिता
बुध्यन्ति बोधिं विरजामसंस्कृताम्[6] ॥३०॥

[7]इति श्रीसमाधिराजे शालेन्द्रराजपूर्वयोगपरिवर्तो नाम द्वितीयः॥२॥

1 A नुष्टानु
2 B न तस्य विघ्नानु कदाचि भोन्ति
3 A भोन्तु स्वयं
4 A ०तस्योसमयश्च काले
5 A & B ये केचिद् बुद्धा दिशता सुनिर्वृता अनागता येऽपि च प्रत्युत्पन्नाः
6 C सर्वे जिना अ...ला अचिन्तियाम्
7 A & C शालेन्द्रराजपरिवर्तः द्वितीयः

# तृतीयपरिवर्तः

[ तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म ]। तस्मात्तर्हि कुमार यो बोधिसत्त्वो महासत्त्व आकाङ्क्षति तथाग[तस्यार्हतः सम्यक्संबुद्धस्य भूतं [1]बुद्धगुण]वर्णं संप्रकाशयितुं नो चार्थतो वा व्यञ्जनतो वा पर्यादानं गन्तुं[2] सर्वञ्च मे वचनं [ बुद्धपरिगृहीतं [3]निश्चरितुमिति तेन ] कुमार बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानामर्थायायं समाधिरुद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वा[चयितव्यः प्रवर्तयितव्य उद्देष्टव्यः[4] स्वाध्येतव्यः[5] अरणभावनया भावयितव्यो बहुलीकर्तव्यः परेभ्यश्च विस्तरेण]-संप्रकाशयितव्यः। कतमे च ते कुमार तथागतस्य भूता बुद्धगुणाः[6]। इह कुमार बोधिसत्त्वो महासत्त्वोऽ[रण्यगतो वा वृ]क्षमूलगतो वा अभ्यवकाशगतो वा शून्यागारमध्यगतो वा एवं[7] प्रतिसंशिक्षते। एवं[8] स भगवांस्तथागतोऽर्हन् ] सम्यक्संबुद्धो विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानाञ्च मनुष्या-

1 B भूतबुद्धगुणवर्णं

2 B पर्यादातुं गणं

3 A & B निश्चरेदिति

4 B उपदेष्टव्यः

5 A B & C स्वाध्यातव्यः

6 A तथागतस्य बुद्धगुणाः

7 B शून्यागारगतो वा इति Cf. *Majjhima*, I, pp. 297, 323: Idha bhikkhu araññagato vā rukkhamūlagato vā suññāgāragato vā iti patisañcikkhati: Atthi nu kho etc.

8 A & B इत्यपि Tib.16 b l. 1. འདི་སྐད C रहोगतः प्रतिसंलीनो वा एवं संप्रतिशिक्षते एवं

णाञ्च [बुद्धो भगवान् । निष्यन्दः स त]थागतः पुण्यानाम् । अविप्रणाशः कुशलमूलानाम् । अलङ्कृतः क्षान्त्या । आगमः पुण्य[निधानानाम् । चित्रितोऽनुव्यञ्जनैः[1] । कुसुमितो] लक्षणैः[2] । प्रतिरूपो गोचरेण[3] । अप्रतिकूलो दर्शनेन । अभिरतिः श्रद्धाधिमुक्ता[नाम् । अनभिभूतः प्रज्ञया । अनवमर्दनी]यो बलैः । शास्ता सर्वसत्त्वानाम् । पिता बोधिसत्त्वानाम् । राजा आर्यपुद्गलानाम् । सार्थवाह [आदिकर्मिकाणाम्[4] । अप्रमेयो ज्ञानेन । अनन्तः] प्रतिभानेन । विशुद्धः स्वरेण । आस्वादनीयो घोषेण । आसेचनको रूपेण[5] । अप्रति[समः कायेन । अलिप्तः कामैः । अनुप]लिप्तो रूपैः । असंसृष्ट आरूप्यैः । विमुक्तो दुःखेभ्यः । विप्रमुक्तः स्कन्धेभ्यः[6] । विसं[युक्तो धातुभिः । संवृत[7] आयतनैः । प्रतिच्छिन्नो ग्रन्थैः[8] ।] विमुक्तः परिदाहैः । परिमुक्तस्तृष्णायाः । ओघादुत्तीर्णः । परिपूर्णो ज्ञानेन । प्रतिष्ठितो[ऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भ]गवतां ज्ञाने । अप्रतिष्ठितो निर्वाणे । स्थितो भूतकोट्याम् । स्थितः सर्वसत्त्वोल्लोकनीयायां भूमौ[9] । इमे ते कुमार तथागतस्य भू[ता बुद्धगुणाः । एभिर्बुद्धगुणवर्णैः[10] समन्वागतो ] बोधिसत्त्वो महासत्त्व इमं

1 A चित्रितो व्यञ्जनैः

2 C क्षान्त्यः आगमः पुण्यानि लक्षणैः

3 A गौरवेण Tib. 16b, l. 5: སྤྱོད་ ཡུལ་ རན་པར་མཐུན་པ །

4 A आदिकर्मिणाम् ; B आदिकर्मकानाम्

5 B आसेचनो रूपेण

6 A drops विप्रमुक्तः स्कन्धेभ्यः ; Tib. omits विमुक्तो दुःखेभ्यः

7 B संवृत्त आ०

8 A प्रतिच्छन्नो ग्रन्थैः

9 B drops स्थितः सर्वसत्त्वोल्लोकनीयायां भूमौ

10 A ०गुणैर्वर्णैः

समाधिमागम्यानाच्छेद्येन[1] प्रतिभानेन तथागतस्यार्हतः [सम्यक्संबुद्धस्य भूतं बुद्ध]गुणवर्णं संप्रकाशयन् नो चार्थतो[2] [नो] व्यञ्जनतश्च पर्यादानं गच्छति। सर्वं चास्य वचनं बुद्धपरि[गृहीतं निश्चरेति[3]]।

अथ भगवांस्तस्यां वेलायामिमा गाथा अभाषत[4]।

न सुकरु[5] जिनवर्ण सर्वि वक्तुं
बहुम[पि कल्पसहस्र भाषमाणैः।
तथ] गुण समुदानिता[6] जिनेभिः
इमु वरु[7] शान्त समाधिमेषमाणैः ॥१॥

परम सु[8]अभिरूपदर्शनीयाः
कन्य अलङ्कृतगात्र प्रेमणीयाः।
दत्त पुरि[9] अदीनमानसेन
इमु वरु शान्त समाधिमेषता मे ॥२॥

तथ मयि[10] धनधान्यदासिदासा[11]
तथ मणिमुक्तिसुवर्णरूप्यकञ्च।

1 B ॰नच्छेदेन

2 B प्रकाशयन्तो चार्थतो॰ Tib. 17a, l. 7 ཡང་དག་པར་བསྟན་ ན་ དོང་ མཐྲུ ཡོངས་སུ་ཟད་པར་མི་འགྱུར་ ཏེ །

3 Tib, 17a-b, l. 1: ཡོངས་སུ་བཟུང་བར་འགྱུར་རོ །

4 A & B अथ खलु भगवानेतमेवार्थमुद्योतयमानश्चन्द्रप्रभस्य कुमारभूतस्य भूयस्या मात्रया तस्यां वेलायां गाथाभिर्गीतेन विस्तरेण संप्रकाशयति स्म। Tib. follows A & B.

5 C सुकर

6 C ॰दानितुं

7 B & C इम वर

8 B परमसु

9 B & C त्यक्तमय

10 C तल अपि

11 B & C ॰दासं

त्यक्त मयि[1] अदीनमानसेन
इमु वरु शान्त समाधिमेषता मे ॥३॥
मणिरतनविचित्रमुक्तहारा
रुचिर[पि वसन[2] शङ्खसुवर्णसूत्रा[3] ।
त्यक्त[4] मयि पुरा विनायकेषु[5]
इमु वरु शान्त समाधिमेषता मे ॥४॥
अपरिमित अनन्तक[ल्पकोट्यः
परमसुगन्धिकवार्षिकाश्च] ।
त्यक्त मयि[6] जिनान चेतियेषु
परम निरुत्तरु चित्तु[7] संजनित्वा ॥५॥
तथरिव मयि[8] दत्तु ध[र्मदानं
पर्षगतेन जनित्व चित्रिकारम्[9] ।
न च] मम समुत्पन्न[10] जातु चित्तं
सिय मम ज्ञातु [11]ददित्य धर्मदानम् ॥६॥

1 C मय 2 A निंधत ; B नन्दने

3 A हर्षस्वर्णसूत्रा Tib 17b, l. 5-6: གོས་དང་གདུ་བུ་གསེར་སྐུད་མཛེས་པ་དག །

4 B त्यक्तु 5 B पुराणकेषु 6 C त्यक्त मय

7 A परनिरुतचित्तु० 8 B तथपि च ; C तथमयरिव

9 A विचित्रिकारम् Tib. 17b, l. 7: འཁོར་གྱི་ནང་དུ་རི་མོ་བསྐྱེད་ནས་ཀྱང་།

10 C समुपन्नु 11 B सियम ज्ञातु ( ज्ञातु = ख्यातिः ) cf. Tib. 18a, l. 1:

ཆོས་ཀྱི་སྦྱིན་པ་བྱིན་པས་ང་གྲགས་སྙམ །
ང་ལ་ནམ་ཡང་དེ་འདྲའི་སེམས་མ་སྐྱེས ॥

[1]एत गुण समुदा[नितुं[2] मि पूर्वा
वन वरु सेवित नित्यमल्पश]ब्दम्[3] ।
कृपबहुलु भवामि नित्यकाल
सद मम चित्तु लभेय बुद्धज्ञानम्[4] ॥७॥

[न च मम कश्चिदाग्रहो[5] अभूषि
प्रियतरवस्तुन[6] आत्मनोऽपि भोक्तुम् ।
ददमि अहु प्रभूत देय धर्मं
सद मम [7]चित्तु लभेय बुद्धज्ञानम्][8] ॥८॥

अखिलम[धुरसंविभागशीलः[9]
स्मितवदनः श्रुति]धारि[10] स्निग्धघोषः ।
सुमधुरवचनः प्रियो बहूनां
जन[11] मम सर्वि अतृप्त दर्शनेन[12] ॥९॥

[क्षणमपि च न मत्सरी भवामि
भ]वनियुतेन[13] न जातु ईर्ष्यमासीत्[14] ।

1 B drops the 7th śloka. ; C धूत
2 A & B ०दानिता
3 A & C ०शब्दाः
4 A बुद्धज्ञाने
5 B न च मम इति आग्रहो
6 B प्रियतमत्वन
7 B चित्तं
8 C puts this verse after verse 11 Tib. puts the ninth verse before the eighth.
9 Tib. 18a, l. 3: ཕྱམས་ཤིང་འཇམས་ལ་སྒོག་པའི་ངང་ཚུལ་ཅན།
10 B श्रुतधार
11 B जने
12 B अतृष्णादर्शनेना
13 B & C नियुतेषु
14 A ईर्ष्य आसीत

सद अहु परितृप्त[1] पिण्डपाते
सकल निमन्त्रण[वर्जितान्यशेषा[2] ॥१०॥
बहुश्रुत श्रुत]धारि ये भवन्ति
गाथ इतो धरये[3] चतुष्पदां पि ।
ते मयि[4] सद सत्कृता अभूवन्
पर[म निरुत्तर प्रेम[5] संजनित्वा ॥११॥
बहुविधमनन्त[6] दानु दत्तं
तथपि च रक्षितो[7] दीर्घशील[8] रात्रम् ।
पूजु[9] बहुकृता वि[नायकेषु
इमु वरु शान्त समाधि]मेषता मे ॥१२॥
पृथु विविध अनन्त लोकधातून्
[10]मणिरतनैः परिपूर्य दानु दद्यात्[11] ।
इतु धरयि[12] स[माधितश्च गाथाम्
इमु ततपुण्य] विशिष्यते उदारम् ॥१३॥
यावत[13] पृथु केचिदस्ति पुष्पा
तथरिव[14] गन्धमनोरमा उदाराः ।

1 B & C परितुष्ट
2 A वर्जितन्यषरणा
3 A चरेय
4 B ये मयि ; A मयि
5 A सुसु ; Tib. 18a, l. 6: དད་པའི་ མཆོག་ བསྐྱེད་ རྟག་ཏུ བཀུར་ སྟི་བྱས །
6 B & C अनन्त्यु
7 B & C रच्चितु
8 B & C शीलु
9 A पूर्व
10 A ०धमनन्तलोकधातुमणि०
11 A दत्तम्
12 A इमु धरेयि
13 A यावत्
14 C पुष्प तथरिव

ते हि जिनु [महेय्य पुण्यकामा[1]
बहुमपि क]ल्प अनन्त अप्रमेयान्[2] ॥१४॥
यावत पृथु केचिदस्ति वाद्या
तथ[3] बहुभोजन अन्नपानवस्त्राः ।
ते [हि जिनु महेय्य पुण्यकामा[4]
बहुम]पि कल्प अनन्त अप्रमेयान्[5] ॥१५॥
यश्च नरु जनित्व बोधिचित्तम्
अहु जिनु[6] भेष्यु स्वयं[भू धर्मराज[7]ः ।
गाथमिमु धरे समाहितैकां]
ततो विशिष्यते पुण्यमुदारम्[8] ॥१६॥

1 B पुरायकामो  2 A ०ल्पमनन्तमप्रमेयान् ; B बहु मयि अनन्त अप्रमेयां
3 A कन्यास्तथ ; B वाद्यस्तथ  4 B पुरायकामो विकल्प
5 A कल्पमनन्तमप्रमेयान् ; B अप्रमेयां
6 A अज्ञ जिनु ; B अनु ; C जनु 18b, l. 4-5 :
རང་ བྱུང་ རྒྱལ་བ་ ཆོས་ རྗེར་ བདག་ གྱུར་ ཅེས །
མི་གང་ བྱང་ ཆུབ་ཏུ་ནི་ སེམས་ བསྐྱེད་ ནས །
མཉམ་པར་ གཞག་པས་ ཚིགས་ བཅད་ གཅིག་ བཟུང་ན །
དེ་ བས་ བསོད་ ནམས་ འདི་ནི་ རྒྱ་ ཆེར་ འཕགས །
7 B भेषि स्वयंभू धर्मराजः
8 A गाथमितु धरेत् समाधितौका० ; B समाधिततैकामिसु तनु पुरायः ; C ०कामिसु तत्र पुरायु विशिष्यते उदारम् Tib· 18b, l. 4: མཉམ་ པར་ བཞག་ པས་ ཚིགས་ བཅད་ གཅིག་ བཟུང་འ །

यावत पृथु गङ्गवालिकाः[1] स्यु-
स्तावत कल्प [भणेय आनुशंसा ।
न च परिक्षय शक्यु] कीर्त्यमाने
बहुतर पुण्य समाधि[2] धारयित्वा ॥१७॥

तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन [उद्ग्रही]तव्यो धारयितव्यो वाचयितव्यः पर्यवाप्तव्यः । उद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य अरणभावनायोगमनुयुक्तेन च भवितव्यम् । तद् भविष्यति बहुजनहिताय बहुजनसुखाय [लोकानुकम्पायै महतो] जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत[3] ।

तस्माच्छ्रुत्वेति[4] बुद्धानामानुशंसान्[5] सुभद्रकान् ।
क्षिप्रमुद्दिश[था एतं[6] समाधिं बुद्धवर्णितम् ॥१८॥
त्रि]सप्ततिबुद्धकोट्यः [7]पूर्वजातिषु सत्कृताः ।
सर्वे हि ते हि बुद्धेहि इदं सूत्रं प्रकाशितम् ॥१९॥
म[हाकरुणजेतारमिदं सूत्रं नि]रुच्यते ।
[8]बाहुश्रुत्यस्मि[9] शिक्षित्वा बुद्धधर्मा न दुर्लभाः ॥२०॥
भेष्यन्ति पश्चिमे काले निर्वृते लोक[नायके ।
बहु असंयता भिक्षु बाहुश्रुत्ये[10] अनर्थिकाः ॥२१॥

1 A ०बालुकाः
2 C कीर्तना ये बहुतरु पुण्यु समा०
3 A & B omit this prose portion.
4 C तस्माच्छ्रुणित्वैव
5 A ०मानुशंसां
6 B ०शथोधरं समाधिं
7 C ०बुद्धकोटि पू०
8 A राज्ञः
9 C शून्यस्मि
10 A ०न बाहु श्रुते

शीलस्य वर्णं वक्ष्यन्ति शीलेन च अनर्थिकाः ।
समाधिवर्णं वक्ष्यन्ति समा[धिय[1] अनर्थिकाः ॥२२॥
प्रज्ञाय वर्णं वक्ष्य]न्ति प्रज्ञाय[2] च अनर्थिकाः ।
विमुक्त्या बहु भाषन्ते[3] विमुक्त्या च अनर्थिकाः ॥२३॥
चन्दनस्य यथा कश्चिद् भाष[ते[4] पुरुषो गुणान् ।
ईदृशं चन्दनं] नाम गन्धजातं मनोरमम्[5] ॥२४॥
अथान्यः पुरुषः कश्चिदेवं पृच्छेत तं नरम् ।
गृहीतं चन्दनं [किञ्चिद् यस्य वर्णं प्रभाषसे ॥२५॥
स नरं तं] प्रतिब्रूयाद् गन्धवर्णं ब्रवीम्यहम् ।
जीविकां येन कल्पेमि तञ्च गन्धं न वेद्म्यहम्[6] ॥२६॥
एवं [योगेऽप्ययुक्तानां शीलवर्णेन जीविका] ।
पश्चिमे[7] भेष्यते काले शीलञ्चैषां न भेष्यते[8] ॥२७॥

1 B समाध्याने    2 A प्रज्ञया च ; C °न्ते प्रज्ञाय
3 A & B विमुक्तिवर्णं वक्ष्यन्ति ; Tib. follows A & B.  4 A तथा कश्चि भष्यते
5 Tib. 19a, l. 5: སྤོས་ཀྱི་ རྣམ་པ་ ཡོད་འོང་ ཞེས །
6 B भवेत् स्यहम् ; Tib. 19a l. 6-7:

སྐྱེས་བུ་ དེ་ལ་སྨྲར་ སྨྲས་པ།
གང་གིས་ འཚོ་ བར་ བྱེད་པ་ཡི །
སྤོས་ཀྱི་ བསྔགས་ པ་ང བརྗོད་པ །
སྤོས་དེ་ང་ལ་ མེད་ཅེས་ སྨྲ ॥

7 C कश्चि मे    8 B भेष्यसे ; C भेष्यति ; Tib. 19a l. 7:

དེ་བཞིན་ རྣལ་འབྱོར་ མི་ བརྩོན་པ །
ཚུལ་ ཁྲིམས་བསྔགས་ པས་འཚོ་ བ་དག །

एवं योगेऽप्ययुक्तानां समाधिवर्णेन जीविका ।
पश्चिमे भेष्यते काले समाधिश्चैषां न भेष्यते[1] ॥२८॥

एवं योगेऽप्ययुक्तानां प्रज्ञावर्णेन जी[विका ।
भेष्यते पश्चिमे काले प्रज्ञा चैषां न भे]ष्यते[2] ॥२९॥

एवं योगेऽप्ययुक्तानां[3] विमुक्तिवर्णेन जीविका ।
भेष्यते[4] पश्चिमे काले विमुक्ति[श्चैषां न भेष्यते] ॥३०॥

[यथ पुरुष दरिद्रु कश्चिदेव[5]
सचे] परिभूतु भवेन्महाजनस्य[6] ।
स च लभति[7] निधानु पश्चकाले[8]
धनपति भूत्व जनान सत्करेय्या[9] ॥३१॥

एवमि[मु न[10] समाधि याव लब्धो
न च बहुमतो भवतीह[11] बोधिसत्त्वः] ।

ཕྱི་མའི་དུས་ལ་ འབྱུང་ འགྱུར་ ཏེ །
དེ་དག་ལ་ནི་ ཚུལ་ཁྲིམས་མེད ॥

1 This stanza is omitted in A & C.

2 A ०ष्यसे ; C ०स्यति

3 C एवमयुक्तयोगानां

4 C भेष्यन्ति

5 A यथ अपरपुरुषो दरिद्र, कश्चिदेव

6 A परिभूतु भवेन्महाधनस्य ; Tib. 19b, 1.4 :

མང་པོས་ ཡོངས་སུ་ བརྙས་གྱུར་ །

7 A भवति

8 B पश्चिकाल

9 B धनकरि ज्ञात्व सत्करेया ; C ज्ञात्व जानोनु०

10 A एवं मयु न ते समाधि ; B एवं मयु न समाधि C एव स Tib. 19b, l. 4 :

དེ་བཞིན་ཏིང་འཛིན་འདི་ནི་ མ་ཐོབ་ན །

11 A न बहुमतो भवति ह

मरुमनुजकुंभाण्डराक्षसानो[1]
यथ पुरुषु दरिद्रु[2] अर्थहीनः ॥३२॥
यद् पुनरिय लब्ध भोति भूमी
[3][अतुलीयु धर्मनिधानु पण्डितेन ।
मरुमनुज]स्पृहं जनेन्ति[4] तत्र
स च धनु देति[5] निरुत्तरं प्रजानाम् ॥३३॥
तस्म[6] इमि श्रुणित्व[7] आनुशंसां
परमप्रणी[तयः कीर्तिता जिनेन ।
सर्व जहिय ज्ञात]लाभसौख्य-
मिमु वरमुद्दिशथाः समाधि शान्तम् ॥३४॥
ये केचि बुद्धा दिशता सुनिर्वृता
अनागता ये[ऽपि च प्रत्युत्पन्नाः ।
सर्वे च शिक्षित्व[8] इह समा]धौ
बोधिं विबुद्धा अतुलामचिन्तियाम्[9] ॥३५॥
चन्द्रप्रभः कुमारु हृष्टचित्तः
पुरतु जिनस्य स्थिहित्व वाच भाषी ।

1 A मरुमरुतकुम्भाण्डराक्षसानी० ; C ०गुह्यकानां

2 B न यथ पुरुष स द^ ; C यथ स पुरुषु द०

3 A & B शान्तभूमि

4 A स्पृही जनेति ; C स्पृहां जनेन्ति

5 B देहि ; C स च दण्डनीति

6 A & B तस्य

7 C इम श्रुणीत्व

8 A सर्वे शि०

9 C धौ विबुद्ध बोधीमतुलामचिन्त्यां

[अहु[1] पुरुषवरस्य निर्वृतस्य
सु]किसरि कालि[2] इदं धरिष्ये सूत्रम् ॥३६॥
काय अहु त्यजित्व[3] जीवितं च
तथपि च सौख्य यदस्ति[4] लोके[5] ।
तत्र अहु[6] [महाभयेऽपि[7] काले
इमु वरु शान्त समा]धि धारयिष्ये ॥३७॥
महकरुण जनित्व सत्त्वकाये
सुदुःखित[8] सत्त्व अनाथ प्राप्त दृष्ट्वा[9] ।
तेष्वहमुपसंहरि[त्व[10] मैत्री-
मिम वर शान्त समाधि देशयिष्ये] ॥३८॥
पञ्चशत अनून तस्मिन् काले
य उत्थित तत्र समाधिधारकाणाम् ।
पूर्वङ्गम कुमार तेष आसी-
दिह वरसूत्रपरिग्रहे उदारे ॥३९॥

[*इति श्रीसमाधिराजे भूतगुणवर्णप्रकाशनपरिवर्तो नाम तृतीयः* ॥३॥]

1 B अहं पुरुष०
2 C कसर०; Tib. 20a, l. 2: མ་རུང་ དུས་ན
3 C काय मुहु त्वि जिन
4 C सौख्य य केचिद०
5 B ये केचिदस्ति लोके
6 B अहो ; C बहु
7 A मया भस्मि ; Tib. 20a, l. 3:
བདག་གིས་ འཇིགས་པ་ ཆེན་པོའི་ དུས་ན་ཡང །
8 B सुखित
9 C प्राप्तः दृष्ट्वा
10 A तेष्विद०
* B बुद्धानुस्मृतिपरिवर्तस्तृतीयः

# चतुर्थपरिवर्तः

[[1]अथ खलु चन्द्रप्रभः] कुमारभूतो भगवन्तमेतदवोचत्। समाधिः समाधिरिति भगवन्नुच्यते। कतमस्यैतद्धर्मस्याधिवचनं समा[धिरिति। एवमुक्ते भगवांश्चन्द्रप्रभं कुमार]भूतमेतदवोचत्। समाधिः समाधिरिति कुमार उच्यते। यदुत चित्तनिध्याप्तिः[2]। अनुपपत्तिः। अप्रतिसन्धिः[3]। प्रतिसन्धि[ज्ञानम्। अपहृत-भारता। तथागतज्ञानम्। बुद्धवृ]षभिता। रागचिकित्सा। दोषव्युपशमः। मोहस्य[4] प्रहाणम्। युक्तयोगिता। अयुक्त-विवर्जनता[5]। [अकुशलधर्मच्छन्दः[6]। संस्कारान्मोक्षकामता[7]। अध्याशय]प्रतिपत्तिः। जागरिकाया आसेवनम्। प्रहाणस्या-नुत्सर्गः। आरक्षा शुक्लधर्माणाम्। उपपत्तिष्व[विश्वासः। अनभिसंस्कारः। कर्मणामाध्यात्मिका]नामायतनानाममनसिकारः।

1 A & B अथ खलु चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनांजलिं प्रणम्य भगवन्तमेतदवोचत्। पृच्छेय-महं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं कश्चिदेव प्रदेशं स चेन्मे भगवानवकाशं कुर्यात् पृष्टप्रश्नव्याकरणाय। एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्। पृच्छ त्वं कुमार तथा-गतमर्हन्तं सम्यक्संबुद्धं यद् यदेवाकाङ्क्षसि नित्यकृतस्ते कुमार तथागतेनावकाशः। एवमुक्ते चन्द्रप्रभः कुमारभूतो भगवता कृतावकाशो भगवन्तमेतदवोचत्।

2 A & B चित्तस्य नि० ; Tib. 20b, l. 7: སེམས་ངེས་པར་རྟོགས་པ་དང་།

3 Tib. མཚམས་སྦྱོར་བ་མེད་པ་དང་།

4 B साहस्य

5 B ०ताः

6 B कुशल०

7 B शशारान्यात्कुकामता

बाह्यानामायतनानामसमुदाचारः । आत्मनोऽनुत्कर्षणम् । परेषामपंसन[ता । कुशलेष्वनध्यवसानम्[1] । पृथग्जनेष्वविश्वासः । शील]स्य निष्यन्दः । दुरासदता । महौजस्कता । आत्मज्ञानम् । अचपलता । ईर्यापथसम्पदवस्थानम् । [अव्यापादः । अपारुष्यम् परेष्वनुत्पीडा[2] । मित्रा]णामनुरक्षणा । गुह्यमन्त्राणामारक्षणा । अविहिंसा । शीलवतामनुत्पीडना । श्लक्ष्णव[चनता[3] । सर्वत्रैधातुके अनिःसृतता । सर्वधर्मेषु शून्यता] । आनुलोमिकी क्षान्तिः । सर्वज्ञज्ञाने तीव्रच्छन्दता समाधिः समाधिरिति [कुमार] उच्यते । या एतेष्वेवं[रूपेषु धर्मेषु प्रतिपत्तिरप्रतिपत्तिः[4] । अयं स कुमार उच्यते] समाधिरिति ।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत[5] ।

अपावृतं मे अमृतस्य द्वारम्
[आचक्षितो धर्मस्वभावु यादृशः ।
निदर्शिता[6] मे उपपत्ति] यादृशी
प्रकाशिता निर्वृति सानुशंसा ॥ १ ॥

1 B परपापंसनाकुशलेष्वनध्यव० ; Tib. 21a, l. 4:

ཁྲིམས་ལ་ཆགས་པ་མེད་ པ་དང །

2 B अपारुष्यबलेष्वनु०

3 B अनुत्पीडनता सलक्ष्णवचनता

4 B ०रविप्रतिपत्तिः

5 A & B अथ खलु भगवांस्तमेव सर्वधर्मसमतास्वभावविपञ्चितं समाधिमुद्भावयन् चन्द्रप्रभस्य कुमारभूतस्य तस्यां वेलायां भूयस्या मात्रया गाथाभिगीतेन विस्तरेण सम्प्रकाशयति स्म ।

6 B यदृशा निदर्शता

विवर्जनीयाः सद पापमित्राः
कल्याणमित्राश्च निषेवितव्याः ।
वनेषु [वस्तव्य गणान् जहित्वा
मैत्रञ्च चित्तं सद भाव]नीयम् ॥२॥
शुद्धञ्च शीलं सद रक्षितव्यं[1]
धूतेषु पुष्टिः सद विन्दितव्या[2] ।
त्यागश्च प्रज्ञा च निषेवितव्या
न [दुर्लभ एष समाधि भेष्यति ॥३॥
ततो लभित्वा इम] शान्तभूमि[3]
यस्यामभूमिः पृथु श्रावकाणाम् ।
प्रत्यक्षभूता सुगतस्य धर्म
प्रतिलप्स्यथा[4] बुद्धगुणा[नचिन्तियान् ॥४॥
दृष्ट्वा नरान् भाजनबुद्धिमन्तान्
तान् बो]धिचित्तस्मि[5] समादहेथ[6] ।
अनुत्तरे ज्ञानि प्रतिष्ठपित्वा[7]
न दुर्लभो एष समाधिराजः ॥५॥
यस्यार्थि ईर्षा पुन सं[जनेय्या
आहारि निष्यंदिह प्रत्यवेक्षतः[8]] ।

1 C रक्षणीयं 2 C चिन्तनीया ; Tib. 21b, l. 6: སྦྱངས་ལ་དཀའ་བའང་ རྟག་ཏུ་བརྟོན་ པར་བྱ །

3 B शान्तभूमी ; C शान्तभावं 4 B सुगतस्य धर्मा प्रति० ; C प्रतिपत्स्यथा

5 A ०चित्तस्य 6 A समदिपेथ ; B समादयः

7 B प्रतिष्ठिहित्वा 8 B पुनसंभोजनेर्या आहारिनिष्यन्दिहि प्रत्य०

पर्येष्टितश्चो परिभोगतश्च

न दुर्लभो एष समाधि भेष्यते[1] ॥६॥

समाधिराजो यदि वैष[2] शून्यतो

विशु[3][द्धशीलानयु मूर्ध्नि[4] तिष्ठति ।

स्वभावतो] धर्म सदा समाहिता

बाला[5] न जानन्ति अयुक्तयोगाः[6] ॥७॥

येषामयं शान्त समाधिरिष्टो

न तेष जातु भ[युबुद्धि[7] तिष्ठति ।

1 C भेष्यथ Tib. 22a l. 2-3 :

ཡོངས་སུ་འཚོལ་ དང་ ཀུན་ཏུ ལོངས་ སྤྱོད་དང །

ཁ་ཟས་རྒྱུ་ མཐུན་དག་ནི་ གང་གི་ཕྱིར །

ཐག་དོག་ སྐྱེས་པ་ དེ་ལ་རབ་ཏུ་ རྟོགས །

ཏིང་འཛིན་འདི་ རྙེད་པར་ ཡོང་མི་ དཀའ །

2 B चैष ; C तैष

3 C विमाणां शु०

4 B & C ०लान मूर्ध्नि

5 C लाभा

6 Tib. 22a l. 3-4 :

ཏིང་འཛིན་རྒྱལ་ པོ་སྟོང་པ་འདི་ སྒོམ་པ །

ཚུལ་ཁྲིམས་དག་ པའི་མགོ་ལ་དེ་ འདུག་ སྟེ །

ཆོས་རྣམས་ རང་ བཞིན་ རྟག་ཏུ་མཉམ་ བཞག་ན །

བྱིས་པ་མི་རིགས་ བརྩོན་པས་ མི་ཤེས་སོ །

7 A & B न युबुद्ध ; Tib. 22a l. 4 :

འཛིགས་པའི་ བློ་མི་འབྱུང །

सदानुपश्यन्ति नराण]मुत्तम-
मिमां निषेवित्व प्रशान्तभूमिम् ॥८॥
आकारतो यः स्मरते तथागतान्
स भोति शान्तेन्द्रियु[1] शान्तमानसः ।
अभ्रान्तचित्तः स[ततं समाहितः
श्रुतेन ज्ञानेन च सागरोपमः] ॥९॥
अस्मिन् समाधौ हि प्रतिष्ठिहित्वा
यश्चंक्रमे चंक्रमि[2] बोधिसत्त्वः ।
स पश्यति बुद्धसहस्रकोटिय-[3]
स्तदुत्तरे [4]यात्तिक [गङ्गवालुकाः ॥१०॥
उन्मादु गच्छेय नरस्य चित्तं
यो बुद्ध]धर्माण प्रमाणु गृह्णीयात् ।
नैवाप्रमाणस्य प्रमाणमस्ति
अचिन्तिया सर्वगुणे हि नायकाः ॥११॥
न सोऽस्ति सत्त्वो दश[सु दिशासु
यो लोकनाथेन समः कुतोत्तरि ।
सर्वेहि] सर्वज्ञगुणैरुपेत-
माकाङ्क्षथ लप्स्यथ बुद्धज्ञानम् ॥१२॥

1 A omits ०न्द्रिय०
2 Tib. 22a, l. 6: བྱང་ཆུབ་སེམས་དཔའ་འཆག་སར་སྤྱི་འཆག་པ །
3 A & B ०कोटय०
4 C यात्तिक

सुवर्णवर्णेन समुच्छ्रयेण[1]

समन्तप्रासादिकु लोकनाथः ।

यस्यात्र आलम्बनि चित्तु वर्तते

समाहितः सोच्यति बोधिसत्त्वः ॥१३॥

असंस्कृतं संस्कृतु ज्ञात्व विज्ञो

निमित्तसंज्ञाय विभाविताय[2] ।

सो अनिमित्ते भवति प्रतिष्ठितः

[प्रजानती शून्यक सर्वधर्मान् ॥१४॥

यो धर्मकाये भवति] प्रतिष्ठितो

अभाव जानाति स सर्वभावान्[3] ।

अभावसंज्ञाय विभाविताय

न रूपकायेन जिनेन्द्र[4] पश्यति ॥१५॥

आ[रोचयामि प्रतिवेदयामि वो

यथा यथा बहु च वितर्कये]न्नरः[5] ।

तथा तथा भवति तन्निम्नचित्त-

स्तेहि वितर्केहि तन्निश्रितेहि[6] ॥१६॥

1 C अवर्णवर्णेन समु० ; Tib. 22b, l. 3: སྐུ་ལུས་དག་ནི་གསེར་གྱི་མདོག་འདྲ་བས། 2 B विभातिकाय

3 C सर्वधर्मान् ; Tib. 22b, l. 5: དངོས་པོ་ཐམས་ཅད།

4 A & B जिनेन्द्रु 5 B यथायथ बहुल वितर्कये नरः

6 C स्ते ह्रीवितकम्पितनिःश्रतेहि ; Tib. 22b. l. 7-6.

ཁྲོད་ལ་ བསྒོ་ཞིང་ ཁོང་དུ་ ཆུད་པར་ བྱ།

ཇི་ ལྟར་ མི་དག་ མང་དུ་རྟག་ བྱེད་པ།

एवं मुनीन्द्रं स्मरतो[1] नरस्य
आकारतो ज्ञानतो [अप्रमेयतः ।
अनुस्मृतिं भावयतः सदा च[2]
तन्निम्नचित्तं] भवती तत्प्रोणम्[3] ॥१७॥
स चंक्रमस्थो न निषद्यमाश्रित[4]
आकाङ्क्षते[5] पुरुषवरस्य ज्ञानम् ।
आकाङ्क्षमाणः प्रणिधेति[6] [बोधये
भविष्यहं लोकि निरुत्तरो जिनः ॥१८॥
स बुद्ध संजानति] बुद्ध पश्यते
बुद्धान चो धर्मत प्रत्यवेक्षते[7] ।
इह समाधिस्मि प्रतिष्ठिहित्वा
नमस्यते[8] बुद्धमहानुभावान् ॥१९॥

དེ་ལ་ གནས་ པའི་ རྟོགས་པ་དེ་ དག་གིས །
དེ་ བཞིན་ དུ་ ནི་ ལ་ སེམས་ གཞོལ་ འགྱུར ॥

1 A सुरतो 2 B सदैव

3 A भवति तस्यैनः ; B भवति च प्राणम् Cf. Pāli: tapponaṃ ; Sanskrit तत्प्रवणम् ; Tib. 23a: དེ་ལ་སེམས་གཞོལ་རབ་དུ་འབབ་པར་འགྱུར །

4 A & B स चंक्रमस्थाने निषद्य० ; Tib. 23a, l. 1: དེ་ནི་འཆག་འདུག་འགྲེང་ ཞིང་ གནས་པའི་ཚེ །

5 C न कांच्चते 6 B प्रतिथेति 7 A ०ष्ठिहित्व नानमय्यते 8 A तथापि

कायेन वाचा च प्रसन्नमानसा[1]
बुद्धान वर्णं भणती अभीक्ष्णम् ]।
तथाहि सो भावितचित्तसंतती
रात्रिन्दिवं पश्यति लोकनाथान् ॥२०॥
यदापि सो भोति[2] गिलान आतुरः
प्रवर्तते वेदन [मारणान्तिका[3] ।
न बुद्धमारभ्य[4] स्मृतिः प्रमुष्यते
न वेदनाभि]रनुसंहरीयति[5] ॥२१॥
तथाहि तेन विचिनित्व ज्ञाता[6]
अनागता आगत धर्मशून्यता ।
सो तादृशे धर्मनये प्रतिष्ठितो
[न खिद्यते चित्त चरन्तु चारिकाम् ॥२२॥
तस्माच्छ्रु[णि]त्वा इमु आनुशंसा[7]
जनेथ छन्दमतुलाय बोधये[8] ।

1 A & B चित्तेन प्रसन्नमानसो ; Tib. 23a, 1. 3 : ལུས་ དང་ངག་དང་ ཡིད་ རབ་དང་བ་ ཡིས། ।

2 B यथापि सो भोति ; C यदा न सो भोति

3 A मारणात्मिका 4 A ०मालभ्य

5 A ०र्मनु संहरिष्यति ; B ०र्ल्लानु संहरीयति

6 A तथाहि तेनावितथेति ज्ञाता ; B तथैव तेन विचिनित्व ज्ञाना ; C तथाहि तेन विचिनत्व ज्ञाने Tib. 23a, 1. 5-6: ད་ལྟར་དེ་དག་ཡེ་ཤེས་ཀྱིས་ བརྟགས་ པས། ।

7 C आनुशंसान्

8 B बोधयेत्

मा पश्चकाले परितापु भेष्यत[1]
सुदुर्लभं सुग[तवराण दर्शनम् ॥२३॥
अहञ्च भाषेय[2] प्रणीत] धर्मं[3]
यूयञ्च श्रुत्वान समाचरेथाः ।
भैषज्यवस्त्राञ्च[4] गृहीत्व आतुरोऽ[5]-
पनेतु[6] व्याधिं न प्रभोति[7] आत्मनः ॥२४॥
तस्मा[द्विधिज्ञेन विचक्षणेन
इमं समाधिं प्रतिकाङ्क्षता सदा] ।
[8]शीलं श्रुतं त्यागु निषेवितव्यं
न दुर्लभो एष समाधि भेष्यति ॥२५॥

[ इति श्रीसमाधिराजे बुद्धानुस्मृतिपरिवर्तो नाम चतुर्थः[9] ॥४॥ ]

1 A परितायु भेष्यति ; B भेष्यती 2 A भाष्येस्य 3 C धर्मान्
4 A °न्ताञ्च 5 C आकरो 6 A & C अपरे तु
7 C प्रभोन्ति Tib. 2 b l. 1: བདག་གི་ནད་ནི་ གསོ་བར་མི་ནུས་ བཞིན། ।
8 C adds मार्णं 9 B समाधिपरिवर्तश्चतुर्थः

# पञ्चमपरिवर्तः

तत्र भगवांश्चन्द्रप्रभं कुमारभूतमाम[न्त्रयते स्म[1]। भूतपूर्वं कुमार अतीतेऽध्वन्यसं]ख्येये कल्पे असंख्येयतरे विपुलेऽप्रमेये[2]ऽचिन्त्येऽपरिमाणे यदासीत् तेन कालेन तेन समयेन भगवान् घोषदत्तो नाम तथागतोऽर्हन् सम्यक्सम्बुद्धो लोक उदपादि विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः[3] शास्ता देवानाञ्च मनुष्याणाञ्च बुद्धो भगवान्। [तेन कालेन तेन समये]न तस्य भगवतो घोषदत्तस्य तथागतस्यार्हतः [4]सम्यक्सम्बुद्धस्याशीतिः श्रावककोट्यः[5] प्रथमसन्निपातोऽभूत्[6] सर्वेषा-[मर्हताम्। द्वितीयः श्रावकसन्निपातः] सप्ततिः [7]कोट्योऽर्हतामभूत्।

1 A & B तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म। तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रञ्चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेनादीप्तशिरश्चैलोपमचित्तेन मातापितृपुत्रदुहितृज्ञातिसालोहितसम्बन्धिबान्धवान् भार्यादींश्चाग्निवदपहाय सर्वराज्यैश्वर्यसुखांश्च खेटपिण्डकवदुत्सृज्याभिनिष्क्रान्तान्तगृहावासेन भवितव्यम् अरण्याभिमुखेन च। तत् कस्य हेतोः। अभिनिष्क्रान्तगृहावासस्य हि कुमारारण्याभिमुखस्य च बोधिसत्त्वस्य महासत्त्वस्य न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः। तस्मात्तर्हि कुमार पुत्रमित्रज्ञातिसालोहितसम्बन्धिबान्धवान् भार्यादींश्च पावकवदुत्सृज्य सर्वराज्यैश्वर्यसुखांश्च खेटपिण्डकवदपहायाभिनिष्क्रान्तगृहावासोऽरण्याभिमुखश्च भविष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम्। तदनेनापि ते कुमार पर्यायेणैवं वेदितव्यम्

B तत्र......कामेनादीप्तसिरश्चैलोपमेन चित्तेन......भवितव्यम्। अरण्याभिमुखेन च...सम्यक्संबोधिः। किमे पुनरयं समाधिः। Tib. follows A & B.

2 A ०तीतेऽध्वन्यसंख्येयकल्पैश्चासंख्येयतरैर्विपुलैरप्रमेयेऽचिन्त्येऽपरिमाणे; C ०प्रमाणे

3 C ०धम्य०　　4 A & B तथागतस्य सम्य०　　5 C प्राणकोट्यः

6 A & B प्रथमः सन्निपतितो०　　7 C सप्तकोट्योः

तृतीयः सन्निपातः षष्टिः श्रावककोट्योऽर्हतामभूत्[1]। तेन खलु पुनः[2] सम[येन तस्य भगवतो घोषदत्त]स्यार्हतः सम्यक्सम्बुद्धस्य चत्वारिंशद्वर्षसहस्राण्यायुःप्रमाणमभूत्। अयञ्च जम्बुद्वीप ऋद्धः [स्फीतश्च[3] क्षेमश्च सुभिक्षश्च रमणीयश्च बहुजनाकीर्णमनुष्यश्चाभूत्। तेन खलु पुनः[4] समयेनास्मिन् जम्बुद्वीपे द्वौ राजानावभूताम्[5]। [दृढबलश्च नाम महाबलश्च नाम]। तत्रैको राजार्धं जम्बुद्वीपं परिभुङ्क्ते[6] द्वितीयोऽप्यर्धं परिभुङ्क्ते ऋद्धञ्च स्फीतञ्च [क्षेमञ्च] सुभिक्षञ्च[7] [रमणीयञ्च] बहुजना[कीर्णमनुष्यञ्च। तेन कालेन तेन सम]येन राज्ञो महाबलस्य विजिते भगवान् घोषदत्त-स्तथागतोऽर्हन् सम्यक्सम्बुद्ध उत्पन्नोऽभूत्। इति [हि कुमार राज्ञा महाबलेन स घोषदत्तस्तथागतः] परिपूर्णं वर्षसहस्रं निमन्त्रितोऽभूत् सार्धं बोधिसत्त्वसङ्घेन भिक्षुसङ्घेन च [कल्पि-केन[8] परिभोगेणानवद्येन चीवरपिण्डपात्रशयना]सनग्लानप्रत्यय-भैषज्यपरिष्कारेण। तेन च कुमार कालेन तेन समयेन तस्य भगवतो घोषदत्त[स्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य बोधिसत्त्व-सङ्घस्य सश्रावकसङ्घस्य] चोत्सदो[9] लाभसत्कारश्लोकोऽभूत्। श्राद्धाश्च[10] ब्राह्मणगृहपतयो भगवतो घोषदत्तस्य तथागतस्यार्हतः स[म्यक्सम्बुद्धस्य सबोधिसत्त्वसङ्घस्य चोत्सदं लाभसत्कार]-

1 A B & Tib. add अपरिमाणाश्च बोधिसत्त्वा महसत्त्वाः सद्धर्मपरिहारका अभूवन्

2 C पुनः कुमार कालगतेन  3 B स्तुतः हितश्च  4 C पुनः कुमार

5 B ०वभूवताम्; C ०वभूवन्  6 A & B जम्बुद्वीपस्य परि०

7 C बहुभक्ष्यस्य  8 Tib. 25a, l. 2: རུང་བ  9 C ०स्योत्पदो

Tib. 25a. l. 4: ཚ་བར  10 C श्रावकाश्च

मकार्षुः[1] । ते च श्राद्धा ब्राह्मणगृहपतयो [भगवतो] घोषदत्तस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य[2] [लाभसत्]कारायोद्युक्ता[3] अ[भूवन् लोकामिषपूजायै यदुत राज्ञ एव[4] च] महाबलस्यानुशिक्षमाणरूपम्[5] । [इति हि कुमार तस्य] भगवतो घोषदत्तस्य[6] एतदभूत्[7] । परिहीयन्ते वतेमे सत्त्वाः शीलपोषधस[मादानतस्तथागतानामुपसंक्रमणतस्तथागतपर्युपासनतो ब्रह्मचर्यावासतः] [8]प्रव्रज्योपसम्पन्नभिक्षुभावतश्च । [त एते सत्त्वास्तदनन्तरं सुखगुरुकाः । तत् कस्य हेतोः । तथाहि तदनन्तरं[9] सुखमिदं] यदुत लोकामिषपूज । त एते सत्त्वा दृष्टधर्मगुरुकाश्च[10] सम्परायगुरुकाश्च नात्यन्तनिष्ठाः कुशलमूलाय[11] । तत्रेयं[12] [कुमार] कतमा दृष्टधर्मगुरुकता यदुत पञ्चकामगुणाभिप्रायता[13] । तत्र [कुमार] कतमा साम्परायिकगुरुकता । [यदुत स्वर्गलोकाध्यालम्बनता] । कतमा चात्यन्तनिष्ठकुशलमूलगुरुकता । यदुतात्यन्तविशुद्धिः । अत्यन्तविमुक्तिः । अत्यन्तयोगक्षेमता । अत्यन्तब्रह्मचर्यावासः । अत्यन्तपर्यवसानम् । अत्यन्तकुशलमूलनिष्ठा । अत्यन्तपरिनिर्वाणम्[14] । यत्त्वहमेतेषां सत्त्वानां तथा तथा धर्मं

1 C ०श्लोकमकार्षुः 2 A & B घोषदत्तस्य 3 C ०द्युक्ता अ० 4 A राज्ञ एव

5 C रूपा दानपरमा अभूवद् राभूता पतिपत्न्या यदुत शा...ग दानादुपवा...... भिक्षुभावश्च तथागतोपसंक्रमणाच्च पर्युपासनतश्च परिपृच्छनतश्च परिप्रश्नीकरणतश्च गम्भी...

6 See fn. 2. 7 C ०भवत् 8 B उपसम्पदतो भिक्षु० 9 B तदनुत्तरां

10 A दृष्ट एव धर्मगुरुकाश्च ; B दृष्टधर्मगुरुकाः सर्वरागुरुकाश्च

11 A & B यदुत स्वर्गलोकाध्यालम्बनतया नात्यन्तनिष्ठा कुशलमूलाय

12 A & B तत्र 13 A & B drop दृष्टधर्मगुरुकतां यदुत पञ्चकामगुणाभिप्रायता

14 A & B तत्र कुमार कतमत् तदत्यन्तनिष्ठं कुशलमूलं यदुतात्यन्तविशुद्धिः । अत्यन्तब्रह्मचर्यावासः । अत्यन्तपर्यवसानम् । अत्यन्तनिष्ठं कुशलमूलम्

देशयेयं यदमी सत्त्वा[1] यथानुत्तरया धर्मपूजया धर्मप्रतिपत्त्या [च] तथागतं पूजयेयुः ।

अथ खलु कुमार घोषदत्तस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तस्यां वेलायां राज्ञो महाबलस्य तेषाञ्च ब्राह्मणगृहपतीनां संवेजनाभिप्राय[2] इमा गाथा अभाषत ।

दानप्रदानेन अन्योऽन्य सेवतां
तेषान्यम[न्यस्मि न भोति गौरवम् ।
न तादृशीं सेवन वर्णयन्ति]
बुद्धा विदू येष प्रहीणवासनाः ॥१॥
ते तादृशा भोन्ति नराः सुसेविता
ये धर्म देशेन्ति हिताय प्राणिनम् ।
[तेषान्यमन्यस्मि अभेद्यप्रेम[3]
यन्मारकोटीभिरशक्यु भिन्दितुम्] ॥२॥
लोकामिषेणो नर सेवतां नृणां
सर्वेष सांदृष्टिक[4] भोति अर्थः ।
निरामिषं धर्म निषेवतां हि[5]
[महान्त अर्थो भवती नराणाम् ॥३॥
निरामिषं चिन्तु] उपस्थपित्वा[6]
निरामिषं धर्म प्रकाशयित्वा ।

1 A & B omit यदमी सत्त्वा

2 Tib. 26a, l. 2: སྐྱོ་བར་བྱ་བར་དགོངས་པས

3 Tib. 26a, l. 5: མི་ཕྱེད་མཛའ །

4 A & C सेवतां तृणा॑ स तेष सांदृष्टिकु

5 B निसेचितं हि

6 C ०स्थहित्वा

निरामिषं येष भवेत प्रेम
ते तादृशाः क्षिप्र भवन्ति बुद्धाः ॥४॥
[न जातु कामान् प्रतिसेवमानः
पुत्रेषु दारेषु] जनित्व[1] तृष्णाम् ।
गृहञ्च सेवन्तु जुगुप्सनीय-
मनुत्तरां[2] प्राप्स्यति सोऽग्रबोधिम् ॥५॥
ये काम वर्जेन्ति[3] यथा[ग्निकर्षू[4]
पुत्रेषु दारेषु जहित्व तृष्णाम्[5] ।
उत्त्र]स्तु गेहादभिनिष्क्रमन्ति
न दुर्लभा तेष्वियमग्रबोधिः ॥६॥
न कश्चि बुद्धः पुरिमेण आसी
अनागते भेष्यति [वावतिष्ठते[6] ।
येहि स्थितैरेवमगारमध्ये]
प्राप्ता इयमुत्तम अग्रबोधिः[7] ॥७॥
प्रहाय राज्यं यथ खेटपिण्डं
वसेत रण्येषु[8] विवेककामः ।

1 A & C जहित्व ; Tib. 26a, l. 7: བུ་དང་ཆུང་མ་ལ་ ཡང་སྲེད་བསྐྱེད་ནས།

2 C ०नीया अनुत्तर'

3 A वर्जयन्ति

4 A ०कर्पु ; Tib. 26b, l. 1: མེ་ཧུར=अग्निखदा ; अग्निकुण्डम्

5 B जनित्व तृ०

6 A & B योऽव०

7 B ०मुत्तममग्रबोधिः

8 A & B वसेदरण्येषु

क्लेशान् प्रहाय [प्रतिहत्य[1] मारं
बुध्यन्ति बोधिं विरजामसंस्कृ]ताम् ॥८॥
यो बुद्धवीरान् यथ गङ्गवालुका[2]
उपस्थिहिय्या[3] बहुकल्पकोटियः ।
यश्चो गृहातः[4] परिखिन्नमानसोऽ-
भिनि[ष्क्रमेय्या अयु तव उत्तमः ॥९॥
अन्नेहि] पानेहि च चीवरेहि
पुष्पेहि गन्धेहि विलेपनेहि[5] ।
नोपस्थिता[6] भोन्ति नरोत्तमा जिना
यथ प्रव्रजित्वा[7] [चरियाण धर्मम् ॥१०॥
यश्चैव[8] बोधिं प्रतिकाङ्क्षमा]णः
सत्त्वार्थे निर्विण्णु कुसंस्कृतातः ।
रण्यामुखः सप्त पदानि प्रक्रमे
अयं ततः पुण्यविशिष्ट[9] भोति ॥११॥

अश्रौ[षीत् खलु पुनः कुमार राजा महाबलो भ]गवता घोषदत्तेन तथागतेनार्हता सम्यक्सम्बुद्धेन इमामेवंरूपां प्रवर्तितां नैष्क्रम्यप्रतिसंयुक्तां कथाम्[10] । [श्रुत्वा च विमृषति यथाहं भगवतो भाषितस्यार्थमाजानामि]। न भगवान्[11] दानपारमितां वर्णयति। [न

1 B विनिहत्य 2 C ०वालिका 3 C उपस्थया
4 C यश्चोद्गृहीतः 5 C व चीवरेहि वा पुष्पेहिं गन्धेहि विलेपनेहि वा
6 B नाप्रछिता 7 C ०जित्वा च 8 A यथैव
9 A & B अरण्याभिमुखः सप्त पदानि प्रक्रमेदयं ततः पुण्यविशिष्टो०
10 C ०संयुक्ता गाथाः 11 C भगवन्

शीलपारमितां वर्णयति[1]]। अत्यन्तनिष्ठां[2] संवर्णयति। अत्यन्तविशुद्धिम्। अत्यन्त[ब्रह्मचर्यावासम्[3]। अत्यन्तनिर्वाणं[4] संवर्णयति। तस्यैतदभून्नेदं सुकरम[गारमध्यावसता अनुत्तरधर्मप्रतिपत्तिं संपादयितुम्] अर्थं वानुप्राप्तुम्। परिहीणोऽस्म्यनुत्तराया धर्मप्रतिपत्तितः। यत्त्वहं केशश्मश्रूण्यवतार्य [काषायाणि वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारा]दनगारिकां प्रव्रजेयम्। इति हि कुमार राजा[5] महाबलः सार्धमशीत्या ब्राह्मणगृहपतिशतसहस्रैः[6] [परिवृतः पुरस्कृतो येन भगवान् घोषदत्तो नाम] तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रामत्[7]। उपसंक्रम्य भगवतः[8] पादौ शिरसाभिवन्द्य[9] [त्रिःप्रदक्षिणीकृत्य एकान्तेऽस्थात्। अथ खलु कुमार भगवान् घोषदत्तो[10] राज्ञो महाबलस्याध्याशयं विदित्वा[11] इमं सर्वधर्म[12]-स्वभावसमताविपञ्चितं समाधिं देशयते। अथ खलु [13]कुमार] राजा महाबल इमं समाधिं श्रुत्वा तुष्ट उदग्र आत्तमनाः[14] केशश्म[श्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय सम्यगेव] श्रद्धया अगारादनगारिकां प्रव्रजितोऽभूत्। स तथा प्रव्रजितः

1 B वर्णयति शीलपारमितां भगवान् संवर्णयति अत्यन्त०

2 B & C add भगवान्

3 A ब्रह्मचर्यसंवासम्; C adds अत्यन्तपर्यवसानम्

4 A & C insert भगवान्

5 C राज्ञो

6 C प्राणिशत०

7 A ०दत्तस्तेनोप०

8 B तस्य भग०

9 B तं भगवन्तं; C adds भगवन्तं

10 B ०दत्तस्तथागतोऽर्हन् सम्यक्संबुद्धः

11 B ज्ञात्वा

12 A समाधिं सर्वधर्म०

13 A drops कुमार

14 B & C add प्रमुदितः प्रीतिसौमनस्यजातः

सन्निमं[1] समाधिमुद्गृही[तवान्[2]। उद्गृह्य पर्यवाप्य धारयित्वा वाचयि]त्वा[3] भावनायोगमनुयुक्तो व्यहार्षीत्[4]। स तेनैव कुशलमूलेन दशकल्पकोट्यो [न जातु दुर्गतिविनिपातमगमत्] विंशतिञ्च[5] बुद्धकोटीराराागयामास। [6]तेषां च तथागतानामन्तिकादिमं समाधिमश्रौषीत्। श्रुत्वा[7] तेभ्यो बुद्धेभ्यस्तेनोद्गृहीतः[8] पर्यवा[प्तो धारितो वाचितो भावनायोग]मनुयुक्तो व्यहार्षीत्। स ततः [पश्चात् तेनैव कुशलमूलेन दशानां कल्पकोटीनामत्ययेन] परिपूर्णेन कल्पशतसहस्रेणानुत्तरां[9] सम्यक्संबोधिमभिसंबुद्धो[ऽभूत्]। सोऽप्रमेयाणां[10] सत्त्वानामर्थं कृत्वा पश्चाद् बुद्धपरिनिर्वाणेन परिनिर्वृतोऽभूत्। तत्र[11] कुमार यान्यशीतिप्राणिशतसहस्राणि [राज्ञा महाबलेन[12] सार्धं भगवन्तं घोषदत्तं] तथागतमुपसंक्रान्तानि तेऽपि सर्वे इमं[13] समाधिं श्रुत्वा तुष्टा उदग्रा आत्तमनसः[14] प्रमुदिताः प्रीतिसौमनस्यजाताः[15] केशश्मश्रूण्य[वतार्य काषायाणि

1 B ०जित एव सन्नि०    2 C ०मुद्ग्रहीष्यति    3 C adds भावयित्वा

4 Tib. 27b, l. 6: གཞན་པར་གྱུར་ཏོ །

5 A & B ०तिश्च ; C ०भिश्च    6 C adds दशानां च कल्पकोटीनामत्ययेन सर्वेषां तेषां तथा...... तेषां च ; B सर्वेषां च तेषां    7 B & C श्रुत्वापि

8 C तेन चोद्गृहीतः    9 C कल्पसहस्रेणा०

10 B ०भूत्। ज्ञानशूरो नाम तथागतोऽर्हन् सम्यक्संबुद्धोऽभूत्। सोऽप्र० ; C ०संबुद्धो.........सम्यक्संबुद्धोत्सोप्र०

11 C ०निर्वृतः पश्य कुमार...सत्त्वानां महासत्त्वानां अनुत्तराया सम्यक्संबोधेराहरणतायै संवर्तते तत्र

12 B महाबलो०    13 B इमां    14 A & B ०मनस्काः    15 A & B ०जातास्ते

वस्त्राणि] परिधाय सम्यगेव श्रद्धयागारादनगारिकां[1] प्रव्रजिता[2] अभूवन् । तेऽपि तथा प्रव्रजिता इमं समाधिमुद्गृह्य पर्यवाप्य धार-[यित्वा वाचयित्वा भावनायोगमनुयुक्ता] विहृत्य तेनैव कुशलमूलेन विंशतिकल्पकोट्यो न जातु दुर्गतिविनिपातमगमत् । सर्वत्र च कल्पे कल्पे [बुद्धकोटीर्बुद्धकोटीराराागयामास । सर्वेषाञ्च] तेषां[3] तथागतानामन्तिके इमं समाधिं श्रुत्वोद्गृह्य पर्यवाप्य[4] धारयित्वा वाचयित्वा भावनायोगमनुयुक्ता [विहृत्य तेनैव पूर्वकेण कुशल-मूलेन विंशतीनां कल्पकोटीनामत्ययेन ततः] पश्चात् परिपूर्ण-र्दशभिः कल्पसहस्रैरनुत्तरां सम्यक्संबोधिमभिसंबुद्धा[5] दृढ-शूरनामानस्तथागता [अर्हन्तः सम्यक्संबुद्धा लोके उत्पन्ना अभूवन् । तेऽप्य]प्रमेयानसंख्येयान् सत्त्वान् परिपाच्य तेषां चार्थं कृत्वा बुद्ध-परिनिर्वृता[6] अभूवन् । तदनेनापि ते कुमार[7] [पर्यायेणैवं वेदि-तव्यं] यथायं समाधिर्बहुकरो बोधिसत्त्वानां [8]महासत्त्वानामनुत्त-रस्य सर्वज्ञज्ञानस्याहरणाय[9] संवर्तत इति[10] ।

अथ [खलु] भग[वांश्चन्द्रप्रभस्य कुमारभूतस्य तस्यां वेलाया-मेतदेव[11] पूर्वयोगपरिवर्तं भूयस्या मात्रया गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म[12] ।

1 B आगारादगारिकां 2 B प्रव्रजितानि 3 C तेषां च
4 A drops पर्यवाप्य ; C ०धिमुद्गृह्यपर्य० 5 C ०मभिसंबुध्य
6 A & B कृत्वा ततः पश्चाद् बुद्धपरिनिर्वाणेन परि०
7 A & C omit ते कुमार 8 A & C omit महासत्त्वानाम्
9 C बुद्धज्ञान० 10 A & C omit इति
11 B वेलायामेव 12 A drops विस्तरेण संप्र०

स्मराम्य]हं पूर्वमतीतमध्वनि
अचिन्तिये कल्पि नराण उत्तमः[1] ।
उत्पन्नु लोकार्थकरो महर्षि
नामेन सो उच्यति घोष[दत्तः ॥१२॥
अशीतिकोट्यः परिपूर्ण तस्य
प्रथमो गणो] आसिय श्रावकाणाम् ।
द्वितीय चासीत्[2] परिपूर्ण सप्तति-
स्तृतीय चो षष्ट्यरहन्तकोटियः[3] ॥१३॥
सर्वे च [क्षीणाश्रवनिष्किलेशाः
सर्वे च ऋद्धीवल]पारमिं गताः ।
वर्षं सहस्रा दुविविंश[4] चायुः
क्षेत्रञ्च आसीत् परिशुद्ध शोभनम् ॥१४॥
[अभिषेकप्राप्ता परहित अप्रमेया
वशितेहि भूमिहि च सुप्रतिष्ठिताः ।
आसन्न ते द्रुमवरिबोधि बोधितुं
ये बोधिसत्त्वास्त अभूषि तायिनः[5]] ॥१५॥

1 A न नाशत्तमः
2 A आसीत्
3 A अविचिन्तु चायुः; B दुविविनश चायः
4 C चो षष्ट्यहनत्वकोटयः
5 Tib. 29a l. 5: སྐྱོབ་པའི་བྱང་ཆུབ་སེམས་དཔའ་གང་བྱུང་བ།
དཔག་མེད་དེ་དག་གཞན་ཕན་དབང་བསྐུར་ཐོབ།
དབང་དང་ས་ལ་རབ་ཏུ་གནས་པ་སྟེ།
ཤིང་མཆོག་དྲུང་དུ་བྱང་འཚང་རྒྱ་ཉེ།

इह जंबुद्वीपस्मि अभूषि [राजा
दृढबलो नाम महाबलश्च ।
उपा]र्द्धु राज्यस्य तदेकु भुञ्जते
द्वितीय चार्द्धस्य अभूषि राजा ॥१६॥

महाबलस्यो विजितस्मि बुद्धो
उत्पन्न[1] सो देवमनुष्यपूजितः ।
[लभित्व राजा सुगतस्मि] श्रद्धाम्
उपस्थिही वर्षसहस्रपूर्णम् ॥१७॥

तस्यानुशिक्षी बहु अन्यसत्त्वाः[2]
कुर्वन्ति सत्कार तथागतस्य ।
लोकामिषेणैव हि धर्म[3] [पूजया
स श्रावकस्य अतुलोभू] उत्सदः[4] ॥१८॥

अभूषि चित्तं पुरुषोत्तमस्य[5]
देशिष्य धर्ममिमि धर्मकामाः ।
यन्न्यून सर्व प्रजहित्व कामा-
निह[6] प्रव्रजे[युर्मम शासनस्मिन् ॥१९॥

स भाषते गाथ] नराणमुत्तमः
संलेखिधर्मं सुगतान शिक्षाम्[7] ।

1 B उत्सन्नु
2 A अल्पि० ; B अन्यि स०
3 B लोकामिषोणो नहि धर्म०
4 B अतुला भू उत्सदाः
5 A & B द्विपदो०
6 B नहि
7 A शिष्यान् ; Tib. 29b. 1. 3: བདེ་བར་ གཤེགས་ པའི་ བསླབས་ ཆོས་ བསླབ་ པ་དང །

[1]गृहवासदोषांश्च अनन्तदुःखान्
प्रतिपत्ति धर्मेष्विह धर्मपूजा[2] ॥२०॥
श्रुणित्व गाथां तद राज पार्थिवो
एको विचि]न्तेति रहोगतो नृपः ।
न शक्यु गेहेस्मि[3] स्थिहित्व सर्वे[4]
प्रतिपद्यितुमुत्तमधर्मपूजा ॥२१॥
स राज्यं त्यक्त्वा यथ खेटपिण्डं
[प्राणिसहस्रेभिरशीतिभिः सह ।
उपसंक्रमी] तस्य जिनस्य अन्तिकं[5]
वन्दित्व पादौ पुरतः स्थितोऽभूत् ॥२२॥
तेषां जिनो आशयु जानमानो
देशेतिमं[6] [शान्त]समाधि दुर्दृशम् ।
[ते प्रीतिप्रामोद्यसुखेन प्रीणिता[7]-
स्तुष्टा] उदग्रास्तद प्रव्रजिंसु ॥२३॥
ते प्रव्रजित्वान इमं समाधिं
धारित्व वाचित्व पर्यापुणित्व ।
न जातु गच्छे[8] विनि[पातदुर्गतिं
कल्पान कोट्यः परिपूर्ण विंशतिम्] ॥२४॥

1 B drops it

2 C गृहवासदोषाश्च अनन्तदुःखा प्रतिपत्तिधर्मे स्वयधर्मपूजा ; Tib. 29b, l. 4: ཆོས་ལ་སྒྲུབ་པ་ཆོས་ ཀྱི་མཆོད་ཡིན་ཞེས །

3 B रोहस्मि ; C गेहस्मि  4 A & B सर्वा  5 C अन्तिके

6 B देशेन्ति मं ; C °शेति मां  7 B प्रीतितुष्टा .  8 A & B गच्छी

ते तेन सर्वे कुशलेन कर्मणा
अद्राक्षु बुद्धान सहस्रकोटियः ।
सर्वेषु चो तेषु जिनानुशासने[1]
ते प्र[व्रजित्वेमु समाधि भावयी ॥२५॥
ते पश्चिमे कालि] अभूषि बुद्धा
दृढशूरनामान[2] अनन्तवीर्याः ।
कृत्वा च अर्थं बहुप्राणिकोटिनां
ते पश्चि कालेस्मि [3]शिखी[व निर्वृताः ॥२६॥
महाबलो राजा य आसि पूर्वं
स[4] ज्ञान]शूरो अभु बुद्ध लोके ।
तदा बहु प्राणिसहस्रकोटियः
स्थपेत्व बोधाय स पश्चि निर्वृतः ॥२७॥
[तस्माच्छ्रुणित्वा इमु पश्चिकाले
धारेथ सूत्रमिमु] बुद्धवर्णितम् ।
धारेत्विममीदृश धर्मकोषं[5]
भविष्यथा क्षिप्र[6] नराणमुत्तमाः ॥२८॥

[इति श्रीसमाधिराजे घोषदत्तपरिवर्तो नाम पञ्चमः[7] ॥५॥]

1 C जिनान ; Tib. 30a, l. 2: རྒྱལ་བ་དེ་དག་ཀུན་གྱི་བསྟན་པ་ལ །
2 C ०नामेन 3 C शिखि 4 B अज्ञान
5 A ०गञ्जः ; Tib. 30a, l. 5: ཆོས་མཛོད། B ईदृशधर्मराज्ञ
6 C भविष्यसे बुद्ध 7 A घोषदत्तपरिवर्तो नाम पञ्चमः

# षष्ठपरिवर्तः

[तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म]। तस्मात्तर्हि कुमार बोधिस[त्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रञ्चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन समाधि]परिकर्म करणीयम्। तत्र कुमार कतमत्[1] समाधिपरिकर्म। इह कुमार बोधिसत्त्वो महासत्त्वो महा[करुणासम्प्रस्थितेन चित्तेन[2] तिष्ठतां वा तथाग]तानां परिनिर्वृतानां वा पूजाकर्मणे उद्युक्तो भवति यदुत [3]चीवरपिण्डपात[4]शयनासनग्लानप्रत्ययभै[षज्यपरिष्कारैः पुष्पधूपगन्धमाल्यविले]पनचूर्णचीवर[5]च्छत्रध्वजपताकाभिस्तूर्यताडावचरैर्वैजयन्तीभिस्तच्च[6] कुशलमूलं समाधिप्रतिलम्भाय परि[णमयति। स न कश्चिद्धर्ममाकाङ्क्षंस्तथा]गतं पूजयति न रूपं[7] न कामान् न भोगान् न स्वर्गान् न परिवारान्। अपि च[8] ख[लु पुनर्धर्मचित्तको भवति। स आकाङ्क्षन् ध]र्मकायतोऽपि तथागतं नोपलभते[9] किमङ्ग पुनः रूपकायत[10] उपलप्स्यते। तस्मात्तर्हि कुमार [एषां सा तथागतानां पूजा]

1 C कतरः 2 B omits चित्तेन 3 Tib. 30b. 1. 2 ཆོས་གོས=चीवरम्

4 C ०पात० 5 Tib. ན་བཟའ=चीवरम् 6 C omits वैजयन्तीभिः

7 A B & Tib. omit न रूपं 8 A परिवारं अपि च; B परिवारं अपि तु; C परिवारान् सर्वत्रैधातुके व्यवचारनिःसृतः अपि तु

9 C ०गतं तमनुपश्यति नोपल० 10 C पुनरन्यं धर्मकायत

यदुत तथागतस्यादर्शनमात्मनश्चानुपलब्धिः कर्मविपाकस्य चाप्रतिकाङ्क्षमाणता[1]। अनया [कुमार] त्रिमण्डलपरिशु[द्धया पूजया तथागतं पूजयित्वा बोधिसत्त्वो महासत्त्व इमं] समाधिं प्रतिलभते क्षिप्रञ्चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते।

अथ खलु भगवांस्तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य एतदेव समाधिपरिकर्मनिर्देशं भूयस्या मात्रया गाथाभिगीतेन विस्तरेण सम्प्रकाशयति स्म[2]।

अनन्तज्ञानस्य ददित्व गन्धान्
अनन्तगन्धो भवती नराणाम्।
न कल्पकोटीय व्रजन्ति[3] दुर्गतिं
दुर्ग[न्धियं तेषु न जातु भोति[4] ॥१॥
ते कल्पकोट्यश्चरमाणु] चारिकां
पूजित्व बुद्धान सहस्रकोटियः[5]।
ते ज्ञानगन्धेन[6] समुद्गतेन
भवन्ति बुद्धा वरशीलगन्धिकाः ॥२॥

1 A & C ०प्रतिकांक्षणाता

2 C समाधिं प्रतिलभते। सोऽनेन त्रिमण्डलपरिशुद्धेन परिणामेन कियपरीन्तेनापि पुष्पमाल्यगन्धविलेपनेन तथा.........परिणामयति। तस्य तत्कुशलमूलमचिन्त्यविपाकमिमं च समाधिं प्रतिलभते। क्षिप्रं चानुत्तरां सम्यक्संबोधि............इमा गाथा अभाषत।

3 A ०ज्ञानस्य दधित्व ; B ०ज्ञानिस्य ददित्व गत्वान अनन्तु गन्धो भवती नराणां। न कल्प केटिय भ्रजन्ति ; C ०ज्ञानिस्य ददित्व गन्धा अनन्तगन्धो भवती चराणाम्। कल्पा न कोटीय भृजन्ति

4 A दुर्गन्धिय ते न जातु भोति

5 A ०कोटयः ; B पूज्येत्व बुद्धान सहस्रकोटियः ; C सहस्रकोट्याः

6 C ते ज्ञातुगन्धेन

स चेत् पुनर्जान[ति नास्ति सत्त्वो
यो गन्ध देती[1] तथ यस्य दीयते ।
ए]तेन चित्तेन ददाति गन्ध-
मेषास्य[2] क्षान्तिमृदु आनुलोमिकी[3] ॥३॥
तस्यैतं[4] क्षान्तिमधिमात्व[5] सेवतः
सचेन्नरः [काकणिच्छेद्यु छिद्यते[6] ।
कल्पान कोट्यो यथ गङ्गवालिका]
न तस्य चित्तं भवति विवर्तियम्[7] ॥४॥
किं कारणं वुच्यति[8] क्षान्ति नाम
कथं पुनो वुच्यति[9] आनुलोमिकी ।

1 A यो गन्धजाती
2 A गन्धानैषास्य
3 Tib. 31a, l. 5-6:
གལ་ཏེ་ སེམས་ ཅན་གང་དག་ སྤོས་ བྱིན་དང་།
དེ་ བཞིན་ གང་ལ་ སྦྱིན་ པར་བྱ་བ་དང་།
སེམས་ འདིས་ སྦྱིན་ པར་བྱེད་པ་མེད་ ཤེས་ན།
དེ་ནི་ དེ་ཡི་མཐུན་ བཟོད་ ཆུང་ ངུ་ ཡིན༎
4 B तस्यैव
5 C ज्ञान्ती अधिमात्नु
6 B कारुणिकश्च च्छेद्यते
7 C भवतीति वर्तियम् ;
Tib. 31a, l. 6-7: བཟོད་པ་ ཆེན་པོ་ བསྟེན་ པ་དེ་ལ་ནི།
བསྐལ་ པ་བྱེ་ བ་གང་གཱའི་ བྱེ་ སྙེད་དུ།
མི་ཡིས་ ཁམ་ཚད་ ཙམ་ དུ་ བཅད་ གདུབས་ ཀྱང་།
དེ་ཡི་ སེམས་ ནི་ ལྡོག་ པར་ ཡོང་ མི་འགྱུར།
8 C वुच्चरति
9 C पुनो वुच्चति

अविवर्तिको [1]वु[च्यति केन हेतुना
　　कथं पुनो वुच्यति बोधिसत्त्वः ॥५॥
क्षान्त्य]स्मि धर्मे[2] प्रकृतौ[3] निरात्मके
　　नैरात्म्यसंज्ञस्य किलेशु नास्ति[4] ।
खं[5] यादृशं जानति सर्वधर्मां[6]-
　　स्तस्मादिह [स्या क तु[7] क्षान्ति नाम] ॥६॥
[आनुलोमि सर्वेष जिनान शि]क्षतो[8]
　　न चास्ति धर्मश्चरते विचक्षणः ।
न बुद्धधर्मेषु जनेति[9] संशया-
　　नियं स क्षान्तिर्भवतानुलोमिकी[10] ॥७॥
एवं च[रन्तस्य य लोकि मारा-
　　स्ते बुद्धरूपेण भणेय्य[11] वाचा ।
सु]दुर्लभा बोधि[12] भवाहि श्रावका[13]
　　न गृह्णती वाक्यु न चो विवर्तते ॥८॥

1 A सुविवर्तिसो वु० ; B अविवर्तियो वु०　2 A धर्म
3 B प्रकृती　4 B ०संज्ञिस्य ; C ०संज्ञास्य
5 B drops खं　6 A सर्व धर्मा तस्मा०
7 B ०स्या क्तु ; C ०स्या कतु　8 B अनुलोम सर्वेष जिनान शिक्षतो ; A & C शिक्षते
9 B जिनेति
10 C क्षान्ती भवतानुलोकता ; Tib. 31b, l. 2-3 :

རྒྱལ་བ་ཀུན་གྱི་རྗེས་སུ་མཐུན་སློབ་ཅིང་།
མཁས་པ་དེ་ན་ཆོས་མེད་མི་སྤྱོད་དེ།

11 B भणेष्य वाचा　12 A & B भोति
13 B वाक्खुरवो विवर्तते ; C सुदुर्लभा बोधिवरा हि श्रावको

बोधेति सत्त्वान् विषमातु दृष्टितो
न एष मा]र्गो अमृतस्य प्राप्तये ।
कुमार्ग वर्जित्व पथे] स्थपेति
तं कारणमुच्यति बोधिसत्त्वः ॥९॥
क्षमिष्यनूलोमपथे[1] स्थितस्य
नैरात्म्यसञ्ज्ञाय विबोधितस्य ।
स्वप्नान्तरेऽप्य[स्य न जातु भोति
अस्ति नरो पुद्गल जीव सत्त्वः] ॥१०॥
सचे मारकोट्यो यथ गङ्गवालुका-
स्ते[2] बुद्धरूपेण उपागमित्वा ।
भणेयुरभ्यन्तरकायु जीवो[3]
ते [मं वदे नास्ति नयू [व] बुद्धा[4] ॥११॥
ज्ञानेन] जानाम्यहं स्कन्धशून्यकं[5]
ज्ञात्वा च क्लेशेहि न संवसामि ।
व्याहारमात्रेण च व्योहरामि[6]
परिनिर्वृतो लोकमिमं[7] चरामि ॥१२॥

1 Tib. 31b, l. 5: ཟེས་སུ་ མཐུན་ བཟོད་ ལམ་ལ་གནས་པ་ དང །

2 B न विमार कोट्यो यथ गङ्गवालिका०

3 A ०रत्यन्तरिकाय जीवा ; B भणेयुरभ्यन्तरिकाय जीवी

4 A नयूयू बुद्धा ; B तेषाञ्चदे नास्ति न यूयबुः Tib. 31b, l. 7:
ལུས་ཀྱི་ནང་ན་ སྲོག་མེད་ བྱུར་ན་ནི །
ཁྱེད་ ཅག་ སངས་རྒྱས་ འགྱུར་པ་མིན་ ཞེས་སྨྲ །

5 C ०शून्यता 6 A व्याहरामि ; C व्यवहारमात्रेण 7 लोमं (or) होमं चरामि

[यथाहि पुत्र पुरुषस्य जातु
कृ]तंसि नामा अयमेव नाम[1] ।
नामं न तस्यो दिशतासु लभ्यते[2]
तथास्य नामं न कुतश्चिदागतम् ॥१३॥
तथैव नामं कृ[तु बोधिसत्त्वो
न चास्य[3] नामं दिशता]सु लभ्यते ।
पर्येषमाणो अय बोधिसत्त्वो[4]
जानाति यो एष[5] स बोधिसत्त्वः ॥१४॥
समुद्रमध्येऽपि ज्वलेत अग्नि-
[र्न बोधिसत्त्वस्य सत्कायदृष्टिः ।
य]तोऽस्य बोधाय उत्पन्नु चित्त-
मत्रान्तरे[6] तस्य न जीवदृष्टिः ॥१५॥
नह्यत्र जातो न[7] मृतो च कश्चि-
दुत्पन्न सत्त्वो मनुजो नरो वा[8] ।
मायोप[मा [9]धर्मस्वभावशून्या
न शक्यते जानितु] तीर्थिकेहि ॥१६॥

1 A सिनामां अयमेव नामा; C नामः 2 A & C न च नामं; Tib. 32a, l. 2:
ཕྱོགས་རྣམས་ན་ཡང་དེ་ཡི་མིང་མི་རྙེད། །

3 C तस्य दिशता अलभ्यते 4 Tib. places the 3rd line before the 2nd.

5 C एव 6 C उपन्नचित्त अत्रान्तरे

7 A सूतो च 8 A नरोऽपि वा

9 A सर्वस्वभाव०

न चापि आहारविमूर्छितेहि[1]
लुब्धेहि गृध्रेहि[2] च पात्रचीवरे ।
न चोद्धतेहि नपि चोन्नतेहि
शक्या इयं[3] जानि[तु बुद्धबोधिः ॥१७॥
न स्त्यानमिद्धाभिहतैः[4] कुसी]दैः
स्तब्धेहि मानीहि[5] अनात्तपेहि[6] ।
येषां[7] न बुद्धस्मि प्रसादु अस्ति[8]
न शक्यते ही वरबोधि जानितुम्[9] ॥१८॥
न भिन्न[वृत्तेहि पृथग्जनेहि
येषां न धर्मस्मि प्र]सादु अस्ति [10] ।
सब्रह्मचारीषु च नास्ति[11] गौरवं
न शक्यते ही वरबोधि बुद्धितुम्[12] ॥१९॥
अभिन्नवृत्ता[13] हिरि[मन्त लज्जिनो
येषां स्ति बुद्धे अपि धर्मे प्रेम] ।

1 C ॰धिमूर्छितेपि 2 A गृद्ध्येहि ; C गृद्धेहि
3 C कृत्वा इमं ; Tib. 32a, l. 7 :
འཁྲུན་པ་རྣམས་དང་ ཁེངས་པ་དག་ གིས་ཀྱང །
སངས་རྒྱས་ བྱང་ཆུབ་འདི་ནི་ཤེས་ མི་ནུས ༎
4 B ॰शतैः 5 A तथेहि मानेहि ; B स्तष्टहि मानेहि 6 C अनोत्तसेहि
7 B & C येषा 8 A अस्मि 9 A बुद्धितुम् ; B बुद्धतुम्
10 A प्रसाद अस्मि 11 A न चास्ति
12 B ही इय बोधि ; C ह्री इय बोधि बुखितुम् 13 C ॰तृप्ता

सब्रह्मचारीषु च तीव्र गौरवं
ते[1] प्रापुणन्ती[2] वरबोधिमुत्तमाम् ॥२०॥
स्मृतेरुपस्थान इह[3] येष गोचरः[4]
[प्रामोद्यप्रीति शयनमुपस्तृतम्[5] ।
ध्यानानि चाहा]रु समाधि पानियं[6]
बुध्यन्ति तेऽपि[7] वरबोधिमुत्तमाम् ॥२१॥
नैरात्म्यसंज्ञा च दिवाविहारो
[8]अनुस्मृतिश्चं[क्रमशून्यभावः[9] ।
बोध्यङ्गपुष्पा सुरभी मनोर]मा[10]
ते युज्यमाना वरबोधिप्रापणी[11] ॥२२॥
या बोधिसत्त्वान चरी विदूना[12]-
मभूमिरन्यस्य जनस्य त[त्र ।

1 C omits ते
2 A प्राप्नुवन्तीव ; B प्रापनन्ती
3 A स्मृतिरुपस्थानिहि ; B स्मृतेरुपस्थानिहि ; C स्मृतेरुपस्थानिह
4 B येषु गौरवं
5 B ०नरुपस्कृतम्
6 A & B जानियं
7 A तेपी ; B ते चो ; C ते ही
8 C ०स्मृती चं०
9 B अनुस्मृतिश्चंक्रमुशून्यभावनं ; Tib. 32b, l. 4:

བདག་མེད་ པ་ཡི་འདུ་ཤེས་ཉིན་པར་ གནས །
འཆག་སར་ སྟོང་པ་ དང་ནི་ རྗེས་སུ་དྲན ॥
བྱང་ཆུབ་ཡན་ལག་ མེ་ ཏོག་ ཡིད་ འོངས་ གསུངས །
བརྩོན་པ་དེ་དག་ བྱང་ ཆུབ་དམ་པ་ཐོབ ॥

10 A बोध्यङ्गबुष्यासुरभि०
11 A प्रापुणी
12 A या बोधिसत्त्वान चरती वि० ; C ०त्वानाचरी विदूनामभू०

प्रत्येकबुद्धान च श्रावकाण च
　　　　को वात्र विज्ञो[1] न जनेय] छन्दम्[2] ॥२३॥
सचेन्ममा आयु[3] भवेत एत्तकं[4]
　　　　कल्पान कोट्यो यथ गङ्गवालुकाः[5] ।
एकस्य रोमस्य भणेय वर्णं[6]
　　　　बौद्धे[न ज्ञानेन पर्यन्तु[7] नास्ति ॥२४॥
तस्माच्छ्रुणित्वा इमु आनुशंसा-
　　　　म]नाभिभूतेन जिनेन देशिताम्[8] ।
इमं समाधिं लघु उद्दिशेया[9]
　　　　न दुर्लभा भेष्यति अग्रबोधिः ॥२५॥

[इति श्रीसमाधिराजे समाधिपरिवर्तो नाम षष्ठः[10] ॥६॥]

1 B प्रत्येकबुद्धान श्रावकाणा चो को वात्र विज्ञ　　2 B & C च्छन्दः
3 C आशयु　　4 A भवेय एत्युकं ; B यत्तकं　　5 C ०वालिकाः
6 A भणेत् सुवर्णं　　7 A नन्तु　　8 A देशिकाम्
9 A उद्दिशेथा ; B उद्दिसेषा　　10 A समाधिपरिवर्तः षष्ठः ; B षष्ठमः

# सप्तमपरिवर्तः

[ तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म ]। तस्मात्तर्हि कुमार [बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामे]न त्रिक्षान्ति-ज्ञानकुशलेन[1] भवितव्यम्। तेन प्रथमा क्षान्तिः प्रज्ञातव्या। द्वितीया क्षान्तिः प्रज्ञातव्या। तृतीया क्षान्तिः प्रज्ञा[तव्या। त्रिक्षान्तिविशेषकुशलेन भवितव्यं त्रिक्षान्ति]ज्ञानविशेषकुशलेन च[2]। तत् कस्य हेतोः। तथाहि कुमार यदा बोधिसत्त्वो महा-सत्त्वस्त्रिक्षान्तिविशेषकुशलो[3] भ[वति त्रिक्षान्तिज्ञानविशेषकुशलश्च भवति तदा]यं कुमार बोधिसत्त्वो महासत्त्वः क्षिप्रं समाधिं प्रति-लभते[4] क्षिप्रं चानुत्तरां[5] सम्यक्संबोधिमभिसंबुध्यते। तस्मात्तर्हि कुमार बोधिसत्त्वेन महास[त्त्वेन क्षिप्रं चानुत्तरां सम्यक्संबोधि-मभिसंबोद्धुकामे]नायं त्रिक्षान्त्यवतारो धर्मपर्याय उद्ग्रहीतव्यः। उद्गृह्य च परेभ्यो विस्तरेण सम्प्रकाशयितव्यः। तद् भविष्यति बहुजनहिताय [बहुजनसुखाय लोकानुकम्पा]यै महतो जनकाय-स्यार्थाय हिताय[6] सुखाय देवानाञ्च मनुष्याणाञ्चेति[7]।

1 B ०ज्ञानमूलेन कुशलेन

2 B ०ज्ञानकुशलेन च भवितव्यम्; C ०ज्ञानकुशलेन भवितव्यम्

3 C ०सत्त्वः क्षान्तिवि०

4 C drops क्षिप्रं समाधिं प्रतिलभते

5 C क्षिप्रमनुत्तरां

6 C ०कायस्य हितार्थाय

7 C drops इति

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभू[तस्येमं क्षान्त्यवतारं धर्मपर्यायं] गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म ।

न केनचित् सार्धं[1] करोति विग्रहं
न भाषते वाचमनर्थसंहिताम् ।
अर्थे च धर्मे च स[दा प्रतिष्ठितः
प्रथमाय क्षान्तीय सद निर्दि]शीयति[2] ॥१॥

मायोपमान्[3] जानति सर्वधर्मान्
न चापि सो भोति[4] निमित्तगोचरः ।
न हीयते ज्ञानविवृद्धभूमेः[5]
प्रथमाय क्षान्तीय [इमे विशेषाः ॥२॥

स सर्वसूत्रान्तनयेषु कोवि]दः
सुभाषितेऽस्मिन्नधिमुक्तिपण्डितः[6] ।
अनन्तज्ञानी सुगतान ज्ञाने[7]
प्रथमाय क्षान्तीय इमे विशेषाः ॥३॥

यः कश्चि धर्मं[8] शृ[णुते सुभाषितं
बुद्धान चो भाषित[9] तन्न काङ्क्षति] ।
अधिमुच्यते सर्वजिनान धर्म ते[10]
प्रथमाय क्षान्तीय इमे विशेषाः ॥४॥

1 A B & C साधु 2 A निदिर्शयी ; B सुनिर्दिसीयति 3 C मायोपमा
4 C मोहोति 5 B ज्ञानी विवृद्धिभूमेः ; C विवृद्धिभूय
6 B मुक्तुपरिण्डतः ; C ०मुक्तपरिण्डतः 7 B ज्ञान ; C ज्ञानी
8 A यत् किञ्चिद्धर्मं ; B यं किञ्चिधर्मं ; C यं कञ्चि 9 A & B भाषितु
10 A B & C धर्मतां ; Tib. 34a, l. 1: རྒྱལ་བ་ཀུན་གྱི་ཆོས་ལ་དེ་མོས་ཏེ །

नीतार्थसूत्रान्त[1] विशेष जानति
यथोप[दिष्टा सुगतेन[2] शून्यता ।
यस्मिन् पुनः पुद्गल]सत्त्वपूरुषो[3]
नेयार्थतां जानति[4] सर्वधर्मान्[5] ॥५॥
ये अस्मि लोके पृथु अन्यतीर्था
न तस्य तेषु प्रतिहन्यते मनः[6] ।
[कारुण्यमेतेषु उपस्थपेति
प्रथमाय क्षान्ती]य इमे विशेषाः ॥६॥
आभासमागच्छति तस्य धारणी
तस्मिंश्च आभासि न जातु काङ्क्षति[7] ।
[8]सत्यानुपरिवर्ति[नि वाच भाषते
प्रथमाय क्षान्तीय इमे विशेषाः] ॥७॥

1 A नीतान्त० ; B drops नीतार्थसूत्रान्त० 2 A सुगते
3 A सन्तु जीवो ; C अत्युसत्त्वो 4 A & B नयार्थतां जानती
5 Tib. 34a, l. 1-2 :

སྟོང་པ་བདེ་བར་གཤེགས་པས་ བཤད་པ་ལྟར །
ངེས་དོན་མདོ་སྡེ་དག་གི་ བྱེ་བྲག་ཤེས །
གང་ལས་ སེམས་ ཅན་གང་ཟག་ སྐྱེས་བུ་ བསྟན །
ཆོས་དེ་ཐམས་ ཅད་ དྲང་ བའི་དོན་དུ་ཤེས ॥

6 C पृथु अन्यतीर्थ्या न तेषु प्रतिपाद्यते मनः
7 Tib. 34a. l. 3-4 :

དེ་ལ་གཟུངས་རྣམས་ ཡོངས་ སུ་སྣང་བར་འགྱུར །
སྣང་ བདེ་ལ་ནམ་ ཡང་ཐེ་ ཚོམ་མེད ॥

8 B सत्यान ; C अन्यात्नु०

चतुर्ण धातून सियान्यथात्वं[1]
वाय्वम्बुतेजःपृथिवीय चापि[2] ।
न चो[3] विवर्तेत स बुद्धबोधेः
प्रथमाय क्षा[न्तीय इमे विशेषाः ॥८॥
ये शिल्पस्थाना पृथु अस्ति लोके[4]]
सर्वेषु सो शिक्षितु बोधिसत्त्वः ।
न चात्मन उत्तरि किञ्चि पश्यति
प्रथमाय क्षान्तीय इमे विशेषाः[5] ॥९॥
अकम्पि[यः समथुबलेन भोति
शैलोपमो भोति विपश्यना]य[6] ।
न क्षोभितु शक्यु[7] स सर्वसत्त्वै-
र्द्वितीयाय क्षान्तीय इमे विशेषाः[8] ॥१०॥
समाहितस्तिष्ठति भाषते च
समा[हितश्चंक्रमते[9] निषीदति ।
समाधिये पारमितां] गतो विदु
द्वितीयाय क्षान्तीय इमे विशेषाः ॥११॥

1 A चतुरर्णवोभूमर्णाया यथात्वं
2 B वायुम्बुतेजो
3 B न चाविवर्तेति
4 B अष्टि लेको
5 A drops सर्वेषु...विशेषाः ; A & C सर्वेष चो शिक्षितु बोधिसत्त्वः । न चात्मनो उत्तरि कं च
6 A विपश्वनायकः,; B समर्थबलेन भोति शैलोपमो भवति विपश्यनायः
7 A न भोभितुं शक्यु
8 B द्वितीयाय क्षान्तीय स निर्दिशीयति ; C अकम्पि......य न क्षोभितं भोति सर्वसत्त्वैर्द्वितीयाय क्षान्तीय. स निर्दिशीयति ।
9 B ०हितश्चक्रमते

समाहितो[1] लभति अभिज्ञ पञ्च
क्षेत्रशतं[2] गच्छति धर्मदे[शकः ।
नो चापि सा ऋद्धि बलात्तु हीयते
द्विती]याय क्षान्तीय इमे विशेषाः ॥१२॥
स तादृशं शान्त समाधि सेवतः[3]
समाहितस्य न स अस्ति सत्त्वः ।
यस्तस्य [चित्तस्य प्रमाणु गृह्णीया
द्वितीयाय] क्षान्तीय इमे विशेषाः ॥१३॥
ये लोकधातुष्विह केचि सत्त्वा-
स्ते बुद्धज्ञानेन[4] भणेयु[5] धर्मान् ।
उद्गृह्यते सर्व[6] [यतो हि भाषितं
द्वितीयाय क्षान्तीय] इमे विशेषाः ॥१४॥
पुरिमोत्तरा दक्षिणपश्चिमासु
हेष्ठे तथोर्ध्वं [7]विदिशासु चैव ।
सर्वत्र सो पश्यति लोकनाथान्
तृ[तीयाय क्षान्तीय स निर्दिशीयति ॥१५॥
सु]वर्णवर्णेन समुच्छ्रयेण
अचिन्तियां निर्मित निर्मिणित्वा[8] ।

1 B समाधितो 2 B क्षेत्रेशतां ; C लभवति अभिज्ञ पञ्च क्षेंत्र:शताः

3 A & C समाधिमेषते ; Tib. བསྟེན་

4 A बुद्धज्ञाने 5 B भाणेय्य 6 B उद्गृह्णाती सर्वं ; C उद्गृह्णाती सर्वं

7 C दक्षिणपश्चिमायणेष्ठे तथोर्द्धं 8 C ०न्तिया निर्मित निर्मिह्नित्वा

देशेति धर्मं बहु प्राणिकोटिनां
तृतीयाय क्षान्तीय [इमे विशेषाः ॥१६॥

य जम्बुद्वीप] इह बुद्धक्षेत्रे
सर्वत्र सो दृश्यति[1] बोधिसत्त्वः।

ज्ञातश्च भोती ससुरासुरे जगे
तृतीयाय क्षान्तीय इमे विशेषाः ॥१७॥

[बुद्धान आचारु तथैव गोचरा
ईर्यापथो या]दृश नायकानाम्[2]।

सर्वत्र सो शिक्षितु भोति पण्डित-[3]
स्तृतीयाय क्षान्तीय इमे विशेषाः[4] ॥१८॥

ये लोकधातुष्विह केचि सत्त्वा-
स्ते [बोधिसत्त्वस्य भणेयु वर्णम्।

सचेऽस्य[5] तस्मिन् ना]नुनीयते मनो
न शिक्षितो उच्यति बुद्धज्ञाने ॥१९॥

ये लोकधातुष्विह केचि सत्त्वा-
स्ते बोधिसत्त्वस्य भणेयु वर्णम्[6]।

1 A & B पश्यति ; Tib. 34b, l. 7 : སྣང་བར་འགྱུར །

2 Tib. 35a, l. 1 : བདེ་བར་གཤེགས་ པའི=सुगतानाम्

3 A B & Tib. शिक्षितु बोधिसत्त्व०

4 B बोधिसत्त्वः ज्ञातश्च भोति ससुरासुरे जगे तृतीयाय क्षान्तीय इमे विशेषाः

5 A स चास्य

6 B भणेय वर्णम् ; C भणे अवर्णम्

सचेऽस्य तेषु प्रति[हन्यते[1] मनो
न शिक्षितोऽद्यापि स बुद्धज्ञाने] ॥२०॥
अर्थेन [2]लब्धेन न भोति सुमना[3]
न चाप्यनर्थेन स भोति दुर्मनाः ।
शैलोपमे चित्ति सदा प्रतिष्ठितो
अयं विशेषस्तृतीयाय [क्षान्तियाः ॥२१॥
घोषानुगामी इय क्षान्तिरुक्ता]
चिन्तामयी भावनानुलोमिकी ।
श्रुतमयी[4] सा अनुत्पत्तिका या[5]
शिक्षा च अत्राप्ययु[6] बोधिमार्गः ॥२२॥
तिस्रो[ऽपि क्षान्तीय यदा निरुत्तराः
स बोधिसत्त्वेन] भवन्ति लब्धाः ।
दृष्ट्वा ततस्तं सुगता नरोत्तमा
वियाकरोन्ति विरजाय बोधये ॥२३॥
ततोऽस्य तं[7] व्याकरणं श्रुणित्वा[8]
प्रकम्पिता मेदिनि [षड्विकारम् ।

1 A स चास्य तत्र ; C स चेह तेषु प्रतिमा०
2 C अनेन ल०
3 C सूमनो
4 A & C श्रुतं मया ; B श्रुतं मयी
5 A ०काला ; Tib. 35a, l. 6: ཐོས་པ་ལས་བྱུང་དེ་ནི་སྐྱེ་བ་མེད །
6 B शिक्षाश्च अत्रा० ; A & C ०प्युयु
7 B ततस्तत ; C ततोऽपि तं
8 C puts the stanza 25 before 24.

आभाय क्षेत्रं भवते प्रभास्वरं
पुष्पा]णि च वर्षिषु देवकोट्यः[1] ॥२४॥
तस्यो च तं व्याकरणं श्रुणि[त्वा
सत्त्वान कोटी नियुता अचिन्तिया ।
उत्पादयी] चित्त वराग्रबोधये
वयंपि भेष्याम जिनाग्रचेतियाः[2] ॥२५॥
क्षान्त्या इमास्तिस्र निरुत्तरा यदा
स बोधिसत्त्वेन भवन्ति लब्धाः[3] ।
न चा[पि सो जायति नापि म्रीयते
न चापि स च्यवति[4] नोपपद्य]ते[5] ॥२६॥
यदा इमा[6] क्षान्ति त्रयो निरुत्तरा
सम्बोधिसत्त्वेन[7] भवन्ति लब्धाः ।
न पश्यते जायति यश्च म्रीयते[8]
स्थितधर्मतां [पश्यति सर्वधर्मान् ॥२७॥
तथाहि तेनो वितथेति [9]ज्ञाता]
मायोपमा धर्मस्वभावशून्याः[10] ।

1 A चो ; C णि चो वर्षति पुष्पवर्षम्

2 B जिनार्य० ; C......न्तु वराग्रबोधये वयं हि स्यामो जिन आर्यचेतिका ॥ ततोस्य तं व्याकरणं श्रुणित्वा प्रकम्पिता मेदिनि......न चो वर्षति पुष्पवर्षम् ॥

3 C क्ष्यान्त्या यदा तिस्र यदा निरुत्तरां संबोधिसत्त्वेन भवन्ति लब्धाः

4 B धूपति 5 A & B न चोप० 6 C इमां

7 C ते बोधिसत्त्वेन ; Tib. 35b, l. 4: ཇོགས་པའི་བྱང་ཆུབ་སེམས་དཔས།

8 A लब्धाः पश्यति जायते यश्च म्रि० ; B म्रि० ; C जायतु यश्च म्री०

9 Tib. 35b, l. 5: མི་བདེན་ པར་ནི། 10 C ज्ञानस्वभावुशून्यता

न शून्यता जायति नो च म्रीयते[1]
स्वभावशून्या इमि[2] सर्वधर्माः[3] ॥२८॥
यदाप्यसौ सत्कृतु भो[ति केनचिद्
उपस्थितो मानितु पूजितोऽर्चितः[4] ।
न तस्य तस्मि]न्ननुनीयते मनो
जानाति सो धर्मस्वभावशून्यताम् ॥२९॥
आक्रुष्टसत्त्वेहि प्रहारतर्जितो
न तेषु[5] क्रोधं कुरुते न मानम् ।
मैत्रीं च[6] ते[षु दृढ संजनेति
तथैव सत्त्वान प्रमोचना]य ॥३०॥
लोष्ट्रेहि दण्डेहि च ताडयमानः[7]
प्रतिघातु तेषु न करोति पण्डितः ।
नैरात्म्यक्षान्तीय प्रतिष्ठितस्य
न विद्यते क्रो[धखिलं न मानः ॥३१॥
तथाहि तेनो वितथेति[8] ज्ञा]ता
मायोपमा धर्मस्वभावशून्याः[9] ।
स तादृशे धर्मनये प्रतिष्ठितः
सुसत्कृतो भोति[10] सदेवलोके ॥३२॥

1 A & B न शून्यतां पश्यति नोच म्रि० ; Tib. follows A & B.
2 A & B इति ; C स्वभावुशून्या इमि
3 B सर्वधर्मान्
4 B पूजितोऽपि
5 C तेष
6 C मैत्रं च
7 A ताड्यमाने
8 B तथाच तेनोवितथेति
9 A सर्व० ; C स्वस्वावु०
10 A & B ०कृतो भवति ; C प्रतिष्ठित सुसत्कृतोति

यदापि सत्त्वाः प्रगृहीत[शस्त्रा-

शिछन्देयु तस्यो पृथु अङ्गमङ्गम्] ।

न तस्य तेषु प्रतिहन्यते मनो

न चापि[1] मैत्री करुणा तु[2] हीयते ॥२३॥

एवं च सो तत्र जनेति चित्तं

छिन्दन्ति ते हि पृथु अङ्गमङ्गम्[3] ।

[तथा[4] न मह्यं शिवशान्तिनिर्वृती[5]

या]वन्न स्थाप्ये इमि[6] अग्रबोधये ॥२४॥

एतादृशे क्षान्तिबले निरुत्तरे

नैरात्म्य-क्षान्ती-समता-विहारिणाम् ।

सम्बोधिसत्त्वान महाय[शानां

कल्पान कोट्यः सततं सुभाविताः[7]] ॥२५॥

1 B न वापिं 2 A & B मैलया क० ; C न चा मैत्री करुणानु हीयते

3 C ही पृथु अङ्गमङ्गे

4 A & B माता ; Tib. 36a, l. 5 :—

འདི་དག་བྱང་ ཆུབ་ མཆོག་ལ་མ་ བགོད་པར །

དེ་སྲིད་ ཞི་བར་ མྱ་ངན་ང་མི་འདའ ॥

5 B च मह्यं सिय शान्त नि०

6 A यावन्न स्थाप्येष्मिमि ; B यावन्न स्थायेष्यिमि ; C वनस्थाप्येष अग्र०

7 B सुभाषिता ; Tib. 36a, l. 5-6 :

དེ་འདྲའི་བཟོད་སྟོབས་ བླ་ མེད་ པ་ལ །

བདག་ མེད་ བཟོད་ པ་མཉམ་ཉིད་ གནས་པ་ཡི །

བྱང་ཆུབ་ སེམས་ དཔའ་ གྲགས་ པ་ ཆེན་པོ་ཡིས །

བསྐལ་པ་ བྱེ་བར་ རྟག་ཏུ་ ཤིན་ཏུ་ སྒོམས ॥

[त]तोत्तरे यात्तिक गङ्गवालुका[1]
न ताव बोधी भवतीह स्पर्शिता[2] ।
ये[3] बुद्धज्ञानेन न करोति[4] कार्यँ
किं वा पुनर्ज्ञान[5] तथागतानाम् ॥३६॥
[क्षपेतु वर्णँ[6] सुकरं न तेषां
प्रभाषता कल्प]शतान्यचिन्तिया[7] ।
अनन्तकीर्तिन महायशानां
नैरात्म्यक्षान्तीय प्रतिष्ठितानाम् ॥३७॥
तस्माद्धि यो इच्छति बोधि बुद्धितुं[8]
तं ज्ञा[नस्कन्धं प्रवरं[9] निरुत्तरम् ।
स क्षान्ति भावेतु जिने]न वर्णितां[10]
न दुर्लभा बोधिवरा भविष्यति ॥३८॥

[इति श्रीसमाधिराजे[11] क्षिान्त्यवतारपरिवर्तो नाम सप्तमः[12] ॥७॥]

1 B & C गङ्गवालिका
2 A स्पर्शिताः ; C भवती स्पर्शिता
3 Tib. 36a, l. 6: ཇི་ཙམ = याव
4 A & B ये बुद्धज्ञानेन क०
5 A & B ज्ञॉनु
6 B वर्णाः
7 A & B ०याम् ; C ०न्तियाः
8 B & C बुध्यते
9 B ज्ञानस्कन्धप्रवरं
10 C ०नेव वर्णितं
11 B drops इति श्रीसमाधिराजे
11 A ०परिवर्तः सप्तमः

# अष्टमपरिवर्तः

तत्र पुनरपि भगवान्[1] चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म[2]। भूत[पूर्वं कुमार अतीतेऽध्वनि असंख्येयैः कल्पैर]संख्येयतरै-र्विपुलैरप्रमेयैरचिन्त्यैरपरिमाणैर्यदासीत्तेन[3] कालेन तेन समयेन

1 C तत्र खलु भगवान् पुनरेव

2 A B& Tib. तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक् संबोधिमभिसंबोद्धुकामेन सर्वधर्माणामभावस्वभावज्ञानकुशलेन भवितव्यम्। कथञ्च कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माणामभावस्वभावज्ञानकुशलो भवति। इह कुमार बोधिसत्त्वेन महासत्त्वेन अभावस्वभावा अनिमित्ता अलक्षणा अनुत्पन्ना अनिरुद्धा अनक्षराः शून्या आदिशान्ताः प्रकृतिविशुद्धाः सर्वधर्माः प्रज्ञातव्याः। यदा च कुमार बोधिसत्त्वेन महासत्त्वेन अभावस्वभावा अनिमित्ता अलक्षणा अनुत्पन्ना अनिरुद्धा अनक्षराः शून्या आदिशान्ताः प्रकृतिविशुद्धाः सर्वधर्माः परिज्ञाता भवन्ति यथाभूततस्तदायं कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माणामभावस्वभावज्ञानकुशल.इत्युच्यते। सर्वधर्माणामभावस्वभावज्ञानकुशलो हि कुमार बोधिसत्त्वो महासत्त्वो रूपशब्दगन्धरसस्प्रष्टव्य-धर्मेभ्यो न रज्यते न दुष्यते न मुह्यते। तत् कस्य हेतोः। तथाहि स तं धर्मं न समनुपश्यति। तं धर्मं नोपलभते। यो रज्येत यत्र वा रज्येत येन वा रज्येत यो दुष्येत यत्र वा दुष्येत येन वा दुष्येत यो मुह्येत यत्र वा मुह्येत येन वा मुह्येत स तं धर्मं न समनुपश्यति नोपलभते। तं धर्ममसमनुपश्यन् अनुपलभमानः सर्वत्रैधातुकेऽनध्यवसितो भवति। क्षिप्र-मिमं समाधिं प्रतिलभते क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते। तत्रेदमुच्यते।

अभावाः सर्वधर्मा अनिमित्ता अलक्षणाः।
अनुत्पन्ना अनिरुद्धाश्च एवं धर्मान् विजनथ ॥
अभावानक्षराः सर्वशून्या शान्तादिनिर्मिताः।
य एवं जानाति धर्मान् कुमार बुद्ध स उच्यते ॥
तस्माद्धि यो इच्छि विपश्चितामिमां स्वभावसमतां सुगतान माताम्।
स भावयातु सर्वि अभावधर्मा प्रतिलप्स्यतीमां जननीं जिनानाम् ॥

तदनेनापि ते कुमार पर्यायेणैवं वेदितव्यम्

3 C असंख्येयतरे विपुलेऽप्रमेयेऽचिन्त्येऽपरिमाणे यदा०

अ[भावसमुद्गतो नाम तथागतोऽर्हन् सम्यक्सं]बुद्धो लोक उदपादि विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानाञ्च मनुष्याणाञ्च बुद्धो [भगवान्। तत् किं मन्यसे कुमार केन कारणेन स तथा]गतोऽभाव[1]समुद्गत इत्युच्यते। स खलु [पुनः] कुमार तथागतो जातमात्र एवोपर्यन्तरीक्षे सप्ततालमात्रं [वैहायसमभ्युद्गम्य सप्त पदानि प्रक्रमित्वा इमामेवंरूपां वा]चमभाषत—अभावसमुद्गताः सर्वधर्मा अभावसमुद्गताः सर्वधर्मा इति। तेन च [कुमार] शब्देन त्रिसा[हस्रमहासाहस्रो लोकधातुः स्वरेणाभि[2]विज्ञप्तो]ऽभूत्। तत्र भौमान् देवानुपादाय यावद् ब्रह्मलोकं परम्परया [3]शब्दमुदीरयामासुः[4] घोषमनुश्रावयामासुः। [अभावसमुद्गतो बतायं] तथागतो भविष्यति। यो जातमात्र एवोपर्यन्तरीक्षे सप्ततालमात्रमभ्युद्गम्य सप्त पदानि प्रक्रमित्वा[5] अभावश[ब्दमुदीरयति[6] इति ह्यभावसमुद्गतोऽ][7]भावसमुद्गत इति तस्य तथागतस्य[8] नामधेयमुदपादि। तस्य च भगवतो बोधिप्राप्तस्य सर्ववृक्षपत्रेभ्यः सर्वतृणगुल्मौ[षधिवनस्पतिभ्यः सर्वशैलशिखरेभ्य][9]श्चाभावसमुद्गतशब्दो निश्चरति[10]। यावति[11] च तत्र लोकधातौ शब्दप्रज्ञप्तिः सर्वतोऽभावसमुद्गत[विज्ञप्तिशब्दो[12]

1 C ०गतस्वभावु०

2 Tib, 37b, l. 3: གཞོན་ནུ་སྒྲ་དེའི་དབྱངས་ཀྱིས།

3 C परया शब्द०

4 B ०मुदानयामासुः

5 C प्रक्रम्य

6 B ०रयन्

7 C ०नुभाव०

8 C omits तस्य तथागतस्य

9 C पर्वतेभ्यः अभाव०

10 B निःसरति

11 A यावन्ति ; B & C यावती

12 B सर्वतोऽभावसमुद्गतविज्ञप्तिः सर्वतोऽभावसमुद्गत०

निश्चरति। तेन च कुमार] कालेन[1] तेन समयेन तस्य भगवतो-ऽभावसमुद्गतस्य[2] तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रवचने[3] महाकरुणाचिन्ती[4] [नाम राजकुमारोऽभूदभिरूपः] प्रासादिको दर्शनीयः[5]। अथ खलु कुमार स[6] महाकरुणाचिन्ती नाम[7] राजकुमारो [येन भगवान् अभावसमुद्गत]स्तथागतोऽर्हन्[8] सम्यक्संबुद्धस्तेनोपसंक्रामद् उपसंक्रम्य तस्य भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य [एकान्तेऽस्थात्]

[अथ खलु कुमार स भगवान्[9] अभाव]समुद्गतस्तथागतोऽर्हन् सम्यक्संबुद्धो महाकरुणाचिन्तिनो [10]राजकुमारस्याध्याशयं[11] विदित्वा इमं समाधिं देशयामास[12]। अथ खलु कुमार स महाकरुणाचिन्ती राजकुमार इमं समाधिं श्रुत्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः [प्रीतिसौमनस्यजातः] प्रसीदति स्म[13]। प्रसन्नचित्तश्च केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्र[व्रजितोऽभूत्[14]। स]

1 A तेन कुमार का० ; B निःसरति। तेन च कुमार तेन का०

2 A ०ऽवभासस० ; C स्वभाव०

3 A प्रवचनेन ; Tib. 38 b. 1. 2 ; གསུང་རབ་ལ །

4 C ०णा चित्त

5 C दर्शनीयः परमशुभवर्णपुष्कलतया समन्वागतः

6 A & B drop स

7 B drops नाम

8 A अवभाससमु० ; B ०गततथागतो नाम अर्हन्

9 A कुमार भग०

10 A ०चिन्ती नाम राज०

11 B ०स्यार्थाग्रशयं

12 C विदित्वा इमं सर्वधर्मस्वभावसमता...काशयति स्म

13 C प्रसीदते

14 A & B विदित्वा इमं समाधिं देशयामास। स इमं समाधिं श्रुत्वा प्रसीदति। प्रसन्नचित्तश्च केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजितः ; Tib. follows A & B.

प्रव्रजितः सन्निमं समाधिमुद्गृहीतवान् उद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्तो व्यहार्षीत्[1]। स तेनैव कुशलमूलेन विंशतिकल्प[कोट्यो] न[2] जातु[3] दुर्गतिविनिपातमगमत्[4]। विंशतीनां कल्पानामत्ययेनानुत्तरां [सम्यक्संबोधिमभिसंबुद्धोऽभूत्। सुविचिन्तितार्थो नाम तथा]गतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि। सर्वेषु च तेषु कल्पेषु[5] विंशतिञ्च बुद्धकोटीराराागयामास[6]। पश्य कुमार [यथायं[7] समाधिर्बहुकरो बोधिसत्त्वानां महास]त्त्वानामनुत्तरस्य बुद्धज्ञानस्य परिपूरणाय[8] संवर्तते[9]।

1 B व्याहार्षीत्; C ०धिमुद्गृह्णाति धारयति वाचयति पर्यवाप्नोति भावनायोगमनुयुक्तश्च विहरति 2 C विंशतिः कल्पकोट्य न 3 C कदाचि

4 C ०पातं गतवान् 5 A B & Tib. drop विंशतीनां......कल्पेषु

6 A ०शतिश्च; B ०शतिञ्च बुद्धकोटीः स रागयामास; C ०शति बुद्धकोट्य आरागितवान्

7 A ०राराागयामास सर्वेषाञ्च तेषां तथागतानामन्तिकादिमं समाधिमश्रौषीत्। श्रुत्वा च तेभ्यो बुद्धेभ्यस्तेनोद्गृहीतः पर्यवाप्तो धारितो वाचितः प्रवर्तितः अरणाभावनया भावितो बहुलीकृतो भावनायोगमनुयुक्तश्च व्यहार्षीत्। स तेनैव पूर्वकेण कुशलमूलेन विंशतीनां कल्पकोटीनामत्ययेनानुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धोऽभूत्। अचिन्तितार्थो नाम तथागतोऽर्हन् सम्यक्सम्बुद्धो लोक उदपादि सोऽप्रमेयानसंख्येयान् सत्त्वान् प्रतिपाद्यापरिमाणानाञ्च सत्त्वानां चार्थं कृत्वा ततः पश्चाज्ज्योतिरिवेन्धनक्षयात् परिनिर्वृतोऽभूत्। तदनेनापि कुमार पर्यायेणैवं वेदितव्यं यथा०

B रागयामास......बुद्धेभ्यो भगवद्भ्यस्तेनोद्...व्याहार्षीत्।......सुविचिन्तितार्थो नाम लोक उदपादि विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानाञ्च मनुष्याणाञ्च बुद्धो भगवान् सोऽप्रमेयानसंख्येयान् सत्त्वान् परिपाच्य अपरिमाणानाञ्च सत्त्वानामर्थं कृत्वा ततः यत् ज्योतिरिवेन्धनक्षयात् परिनिर्वृतोऽभूत्। तदनेनापि ते कुमार पर्यायेणैवं वेदितव्यं यथा०; Tib. follws B

8 A पूरणाय 9 B स वर्तते

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत[1] ।

[स्मराम्यहं पूर्वमतीतमध्वनि
अचिन्तिये] कल्पि नराणमुत्तमम्[2] ।
उत्पन्नु लोकार्थकरो महर्षि-
र्नाम्ना हि[3] सोऽभावसमुद्गतोऽभूत् ॥१॥

स जातमात्रो[4] गगने [स्थिहित्वा
सर्वेष[5] धर्माण[6] अभावु देशयी ।
तदानुरूपं[7] कृतु] नामधेयं
शब्देन सर्वं त्रिसहस्र विज्ञपी[8] ॥२॥

देवापि सर्वे प्रमुमोच[9] शब्दं
अभावु नाम्नेति[10] जिनो भविष्यति ।
यो जात[मात्रः पदसप्त प्रक्रम-
न्नभावु[11] धर्माण] ब्रवीति नायकः ॥३॥

बुद्धो यदा भेष्यति धर्मराजः
सर्वेष[12] धर्माण प्रकाशको मुनिः ।
तृण[वृक्ष]गुल्मौषधिशैलपर्वते[13]
अभावु [धर्माण रवो भविष्यति ॥४॥

1 A B & Tib. वेलायां भूयस्या मात्रया एतमेव पूर्वयोगपरिवर्तं चन्द्रप्रभस्य कुमारभूतस्य विस्तरेण गाथाभिगीतेन संप्रकाशयति स्म

2 A & B ०मुत्तमः 3 B ह्यसो० ; C न ह्यसो०
4 A ०मात्रेण 5 A सर्वेषां 6 B सर्वाण धर्माण
7 A यदानुरूपं 8 A विज्ञयी ; B अभाव गायी
9 B सर्व स मुमोच 10 B नाम्नाति 11 B ०प्रक्रमम०
12 B सर्वाण 13 C पर्वता

यावन्ति शब्दास्त]हि[1] लोकधातौ
सर्वे ह्यभावा न हि कश्चि भावः ।
[तावन्ति खो तस्य तथागतस्य[2]
स्वरु निश्चरी लोकविनायकस्य] ॥५॥
तस्मिंश्च काले अभु राजपुत्रः
करुणाविचिन्ती[3] सद नामधेयः ।
[अभिरूप प्रासादिक दर्शनीय[4]
उपा]गमी तस्य जिनस्य अन्तिकम्[5] ॥६॥
वन्दित्व पादौ मुनिपुङ्गवस्य[6]
प्रदक्षिणं कृत्य[7] च गौरवेण ।
प्रसन्नचित्तो निषसाद[8] तत्र
श्रवणाय [धर्मं [9]विरजमनुत्तरम् ॥७॥
स चो[10] जिनो आशयु[11]] ज्ञात्व धीरः
प्रकाशयामास समाधिमेतम्[12]।
श्रुत्वा च सो इमु[13] विरजं समाधिं
लघु प्रव्रजी जिनवरशासनेऽस्मिन्[14] ॥८॥

1 A यावन्ती सर्वास्तहि
2 A तावन्त्यतो तथा० ; B तावत्त ख्यातेस्य तथा०
3 B करुणाय चिन्तीशद० ; C ०णा अचिन्ती
4 B दर्शनीया
5 C अन्तिके
6 B ०पुङ्गलस्य
7 B कृत्व
8 A ०चित्तोऽभिषसाद ; C प्रशान्तचित्तो निषसादि
9 B धर्मं वि०
10 A & B सो च
11 B आसंयु
12 C ०तत्
13 A श्रुत्वा सो इमु
14 B ०शासनस्मिन्

[स प्रव्रजित्वान इमं समाधिं
धारित्व] वाचित्व पर्यापुणित्वा ।
कल्पान कोट्यः परिपूर्ण विंशतिं
न[1] जातु गच्छे विनिपातभूमिम्[2] ॥९॥

स तेन चैवं[3] कुशलेन कर्मणा
[आरागयी विंशतिबुद्धकोट्यः ।
तेषाञ्च] सर्वेषु[4] जिनान अन्तिका-
दिमं[5] वरं शान्त समाधि भावयी ॥१०॥

स पश्चि[6] काले अभु बुद्धलोके
सुचिन्तितार्थो संद नामधेयः[7] ।
[कृत्वा च अर्थं बहुप्राणिकोटिनां
स पश्चकालेस्मि शिखीव निर्वृतः[8] ॥११॥

[तस्माद्धि य इच्छति बोधि बुद्धितुं
सत्त्वां]श्च उत्तारयितुं भवार्णवात् ।
धारेत सूत्रमिमु बुद्धवर्णितं
न दुर्लभा भेष्यति सोऽग्रबोधिः[9] ॥१२॥

[इति श्रीसमाधिराजे[10] अभावसमुद्गतपरिवर्तो नामाष्टमः[11]॥८॥]

1 A & B ०शति न
2 A & C जग्मुर्विनिपातभूमिम्
3 B & C चैव
4 B सर्वेषा
5 C अन्तिके अयं
6 B स पश्च
7 B ०लोक सुविचिन्तितार्थो शदनामधेयो
8 B कालस्मि शिखीव निर्वृतिः
9 A, B. & Tib. place this stanza in the next chapter, see *Infra*, p. 95, fn. 1.
10 B drops इति श्रीसमाधिराजे
11 A ०पारवर्तोऽष्टमः

# नवमपरिवर्तः

[तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म ।] तस्मात्तर्हि कुमार[1] बोधिसत्त्वेन [महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन गम्भीरधर्मक्षान्तिकुशलेन] भवितव्यम् । कथं च कुमार[2] बोधिसत्त्वो महासत्त्वो गम्भीरधर्मक्षान्तिकुशलो[3] भवति । इह कुमार बोधिसत्त्वेन महासत्त्वेन [मायोपमाः सर्वधर्मा यथाभूततः] प्रज्ञातव्याः[4] स्वप्नोपमा मरीच्युपमाः प्रतिश्रुत्कोपमाः प्रतिभासोपमा उदकचन्द्रोपमा[5] [निर्मितोपमाः प्रतिबिम्बोपमा] आकाशोपमाः [सर्वधर्माः प्रज्ञा-

1 A तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म । तस्मात्तर्हि कुमार य इच्छेद्बोधिसत्त्वो महासत्त्वः किमित्यहं क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसम्बुध्येयं सर्वसत्त्वांश्चोत्तारयेयं भवार्णवादिति तेन कुमार बोधिसत्त्वेन महासत्त्वेनायं सर्वबुद्धसंवर्णितः सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजो धारयितव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । तत् कस्य हेतोः । जनको ह्ययं कुमार सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजस्तथागतानामर्हतां सम्यक्सम्बुद्धानाम् । अतो निर्जाताः सर्वतथागताः सर्वश्रावकप्रत्येकबुद्धाश्च । तस्मात्तर्हि कुमार त्वया सर्वतथागतवर्णितः सर्वतथागतजनकः सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजो धारयितव्यो वाचयितव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्य इति ।

तस्माद्धि यो इतीच्छेद् बोधि बुद्धितुं सत्त्वांश्च संतारयितुं भवार्णवात् ।
धारेतु सूत्रमिमु बुद्धवर्णितं न दुर्लभा बोधिवरा भविष्यति ॥ इति ।

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म । तस्मात्तर्हि कुमार

B तत्र......सत्त्वो न किमि......मभिसंबुद्धोऽयमिति सर्वसत्त्वांश्चोत्तारयेयं भवा... तेन तेन कुमार......धारयितव्यो वाचयितव्यः । तत् कस्य......त्वयायं सर्व......जनकः । ......काशयितव्य इति । तत्रेदमुच्यते । तस्माद्धि यो इच्छति बोधि बुध्यतु......... मामन्त्रयते स्म । तस्मात्तर्हि कुमार

2 B drops कुमार

3 C ०धर्मकुशलो०

4 C प्रत्यवेक्षितव्या

5 A & C ०पमोदकचन्द्रो०

तव्याः। यदा च कुमार] बोधिसत्त्वेन महासत्त्वेन मायोपमाः सर्व-धर्माः परिज्ञाता भवन्ति स्वप्नोपमा मरी[च्युपमाः प्रतिश्रुत्कोपमाः प्रतिभासोपमा उदक]चन्द्रोपमा[1] [ निर्मितोपमाः प्रतिबिम्बोपमा ] आकाशोपमाः सर्वधर्माः[2] परिज्ञाता भवन्ति यथाभूततस्तदा[यं कुमार बोधिसत्त्वो महासत्त्वो गम्भीरधर्मक्षान्तिकुशल इत्युच्यते[3]। स गम्भीरया[4] धर्म]क्षान्त्या समन्वागतो रञ्जनीयेषु धर्मेषु न रज्यते दोषणीयेषु धर्मेषु न दुष्यते मोहनीयेषु धर्मेषु न [मुह्यते। तत् कस्य हेतोः। तथाहि स तं धर्मं न सम]नुपश्यति तं धर्मं नोपलभते[5]। यो रज्येत यत्र वा रज्येत येन वा रज्येत यो दुष्येत[6] यत्र वा दुष्येत[7] येन वा दुष्येत[8] [यो मुह्येत] यत्र वा मुह्येत [येन वा मुह्येत। स] तं धर्मं [न] समनुपश्यति तं धर्मं[9] नोपलभते। तं धर्म[10]-मसमनुपश्यन्ननुपलभमानोऽरक्तोऽ[दुष्टोऽमूढोऽविपर्यस्तचित्तः समा-हि]त इत्युच्यते[11]। निष्प्रपञ्च०[12]। तीर्णः पारगत०। स्थलगत०। क्षेमप्राप्त०। [13]अरू[पप्राप्त०[14]। शीलवानि०]। ज्ञानवानि०। प्रज्ञावानि०। पुण्यवानि०। ऋद्धिमानि०। [स्मृतिमानि०]। मतिमानि०। गतिमानि०। [ह्रीमानि०। धृतिमानि०]।

1 A & C ०पमोदकचन्द्रो०
2 C adds यथाभूतं प्रत्यवेक्षिता भवन्ति
3 Cf. पञ्चविंशतिसाहस्रिका-प्रज्ञापारमिता, पृः १३७, १५४
4 B गम्भीरतया ; C...या क्ष्यान्त्या
5 A तथाहि तं धर्मं समनुपश्यति नोप०
6 B दूष्यते
7 B दूष्यते
8 B दूष्यते
9 B drops धर्मं
10 C धर्मं न सम०
11 ० indicates repetition of इत्युच्यते
12 A drops निष्प्रपञ्च०
13 C अभ...
14 B drops अरूपप्राप्त इत्युच्यते

चारित्रवानि०। धूतगुणसंलेखवानि०[1]। अनङ्गन०। निष्किञ्चन०। अर्हन्नि०। [क्षीणास्रव०। निष्क्लेशो वशीभूतः सु]विमुक्तचित्तः सुविमुक्तप्रज्ञः[2] आजानेयो महानागः कृतकृत्यः कृतकरणीयोऽपहृतभारोऽनुप्राप्तस्वकार्थः [ परिक्षीणभवसंयोजनः सम्यगाज्ञा]सुविमुक्तचित्तः[3] सर्वचेतोवशिपरमपारमिताप्राप्तः[4] श्रमण०[5]। ब्राह्मण०[6]। स्नातक०। पार[ग०। वेदक०। श्रोत्रिय०।] बुद्धपुत्र०। शाक्यपुत्र०। मर्दितकण्टक०। उत्क्षिप्तपरिख०। [उदीर्णपरिख०।] [आक्षिप्तशल्य०][7]। निर्जर०[8]। भिक्षुरि०। अ[परि]वेष्टन०[9]। पुरुष०। सत्पुरुष०। [उत्तमपुरुष०। महापुरुष०।] पुरुषसिंह०। पुरुषनाग०[10]। पुरुषाजानेय०। पुरुषधौरेय०। [पुरुषशूर०[11]। पुरुषवीर०।] पुरुषपुष्प०। पुरुषपद्म०। पुरुषपुण्डरीक०। पुरुषदमक०। पुरुषच[न्द्र०। अकापुरुष०[12]।] पुरुषानुपलिप्त०[13]।

1 C ०संलेधि०    2 B ०भूतः सुविमुक्तप्रज्ञः

3 B ०मुक्तप्रज्ञः आजानेयो महानामचित्तः सर्व० ; C ज्ञानविमुक्तः

4 A & C ०पारमि०    5 A B & C श्रवण०    6 A drops ब्राह्मण०

7 A & B उत्क्षिप्तपरिख०। उदीर्णपरिख०। आप्रहृशल्य० ; Tib. 42b, l. 1: ཟུག་ ཟུང་ཕྱུང་བ།

8 C ०कण्टक उत्क्षिप्तपरिधि तीर्णपरिधि। आती......पूर्णदश इत्युच्यते। निष्परिदाह इत्युच्यते निर्ज्वर इत्युच्यते

9 A अनवधान० ; B अपर्यवदान० ; C अनवसान० ; Tib. 42b, l. 1: ཀུན་ནས་ དཀྲིས་པ་མེད།

10 C ०सिंह इत्युच्यते पुरुषदान्त इत्युच्यते पुरुषनाग०

11 A ०शूरीक० ; B पुरुषं श्रुष

12 B अकापुरुष इत्युच्यते अनुपलिप्त० ; Tib. 42b. l. 4: སྐྱེས་བུ་ཕལ་པ་མ་ཡིན།=अप्राकृतपुरुष०

13 A ०पुरुष० पुरुषरत्न० Tib. 42b, l. 4: མི་གོས་པ།

अथ खलु भगवांस्तस्यां वेलायामिमा[1] गाथा अभाषत ।

यद् लोकधातु[2] [न विवर्त भोति[3]
आकाशु भोति अयु सर्वलोकः[4] ] ।
यथैव तं पूर्वु तथैव[5] पश्चात्
तथोपमान् जानथ सर्वधर्मान्[6] ॥१॥
इदं जगद् याव च[7] किञ्चि वर्तते[8]
अधस्तमेति[9] अभूदापस्कन्धः[10] ।
य[थैव तं हेष्ठे[11] तथैव ऊर्ध्वं[12]
तथोपमान् जानथ सर्वधर्मा]न् ॥२॥
यथान्तरीक्षस्मि न किञ्चिदभ्रं
क्षणेन चो दृश्यति[13] अभ्रमण्डलम् ।
पूर्वान्तु जानीय[14] कुतः प्रसूतं
तथोपमान् जा[नथ सर्वधर्मान्] ॥३॥

1 A ०वानिममेव गम्भीरधर्मद्यान्त्यवतारं धर्मपर्यायमुद्भावयन्निमा० ; B ०वानिममेव गम्भीरधर्मद्यान्त्यवतारं धर्मज्ञापर्याय स भवयन्निमा०  2 A & C लोको धातु

3 A विवर्ण भोति  4 B विवर्त्तो भोती अयुसर्वलोको ; Tib. 42b, 1.5-6 :

ནམ་ ཞིག་འཇིག་རྟེན་ཁམས་འདི་འབྱུང་བ་དང་ །
འཇིག་རྟེན་ཐམས་ཅད་ནམ་མཁའ་པའི་ ཚེ ॥

5 B यथैव तो पूर्व तथैव  6 C जानतः सर्वधर्माः

7 A यावत ; B यावदन्त  8 A किं विवर्तते

9 B & C ०मेती  10 B अमाय स्कन्धः  11 A हेष्ठी ; B ह्यष्ठि

12 B ऊर्ध्वं  13 B चोद्घस्यति

14 A जानेय ; B जानयः ; Tib. 43a, l. 1: སྒྲོག་མ་ག་ལས་བྱུང་བར །

[तथागतस्यो यथ निर्वृतस्य[1]
मनसि] करोन्तः[2] प्रतिबिम्बु दृश्यते[3] ।
यथैव तं पूर्वु[4] तथैव पश्चात्
तथोपमान् जानथ सर्वधर्मान् ॥४॥

यथैव फेनस्य महान्तु[5] [पिण्ड-
मोघेन उच्छेत्तु[6] नरो निरीक्षते[7] ।
निरीक्ष्य सो तत्र] न सारसन्दर्शी[8]
तथोपमान्[9] जानथ सर्वधर्मान् ॥५॥

देवे[10] यथा वर्षति स्थूलबिन्दुके[11]
पृथक् पृथग् बुद्बुद संभवन्ति ।
उत्पन्न[भग्ना न हि सन्ति बुद्बुदा-
स्तथोपमान् जानथ] सर्वधर्मान् ॥६॥

यथैव[12] ग्रामान्तरि[13] लेखदर्शनात्
क्रियाः प्रवर्तन्ति[14] पृथक् शुभाशुभाः ।
न लेखसंक्रान्ति गिराय विद्यते
त[थोपमान् जानथ सर्वधर्मान् ॥७॥

1 A & B परिनिर्वृतस्य 2 B मनाकरोऽन्तः 3 B प्रतिबिम्ब दृ० ; C पश्यति

4 B पूर्वं 5 B ह्येतस्य महन्तु

6 A जाड्येन उद्गृहीतु 7 A निरीक्ष्यते

8 Tib. 43a, l. 3: དེ་ལ་བརྟགས་ན་ སྙིང་པོ་ཡོད་མི་སྣང །

9 A मनसोरसदृशीस्त० 10 A & B देवो 11 A & B बिन्दुकं 12 C यथापि

13 A ०न्तरी ; B ०न्तलि 14 B क्रिया प्रवर्तंति ; C प्रकुर्वन्ति

यथा नरो] मानमदेन[1] मोहितो
भ्रमन्ति[2] संजानतिमां वसुन्धराम्[3] ।
न चो महीया चलितं न कम्पितं[4]
तथोपमान् जानथ सर्वधर्मान् ॥८॥
[आदर्शपृष्ठे तथ तैलपात्रे]
निरीक्षते नारि[5] मुखं स्वलङ्कृतम्[6] ।
सा तत्र रागं जनयित्व बाला
प्रधाविता काम गवेषमाणा[7] ॥९॥
मुखस्य संक्रान्ति यदा [न] विद्यते
[बिम्बे मुखं नैव कदाचि लभ्यते] ।
यथा स मूढा[8] जनयेत रागं
तथोपमान् जानथ[9] सर्वधर्मान् ॥१०॥
[यथैव गन्धर्वपुरं मरीचिका
यथैव माया सुपिनं यथैव[10]] ।

1 A & B पान०  2 Tib भ्रमन्तीं  3 Tib. 43a, l. 6:

ཇི་ལྟར་ མི་ དག་ ཆང་ གིས་ མྱོས་ ནས་ ནི །
ས་ འདི་ ཀུན་ཏུ་ འཁོར་ སྙམ་ བྱེད་ མོད་ཀྱི ॥

4 B महिये चलितं न कल्पितं ; Tib. 43a, l. 6-7:

ས་འདི་ཀུན་ཏུ་འཁོར་སྙམ་བྱེད་མོད་ཀྱི །
ས་འདི་ འགུལ་ཞིང་ གཡོས་ པའང་མེད་པ་ལྟར །

5 A नारी  6 B नारि मुखमलंकृतम् ; C नारि अलङ्कृतं मुखम्

7 A स तत्र...बालः प्रधावितः काम गवेषमाणः  8 A समूढो

9 C जानतु  10 A तथैव

[स्वभावशून्या तु निमित्तभावना
तथोपमान् जानथ सर्वधर्मान्] ॥११॥

यथैव चन्द्रस्य नभे विशुद्धे
ह्रदे प्रसन्ने[1] प्रति[बिम्ब दृश्यते ।
शशिस्य संक्रान्ति ज]ले न विद्यते[2]
तल्लक्षणान्[3] जानथ सर्वधर्मान् ॥१२॥

यथा नरः शैलवनान्तरे स्थितो
भणेय्य गायेय्य हसेय्य [रोदये ।
प्रतिश्रुत्का श्रूयति नो च दृश्यते]
तथोपमान् जानथ सर्वधर्मान् ॥१३॥

गीते च वाद्ये च तथैव रोदिते[4]
प्रतिश्रुत्का[5] जायति तं प्रतीत्य ।
गिराय[6] घोषो न कदाचि विद्यते
त[थोपमान् जानथ सर्वधर्मान् ॥१४॥

यथैव] कामान् सुपिनन्त सेविय
प्रतिबुद्धवन्तः[7] पुरुषो न पश्यति ।
स बाल कामयति कामलोभी[8]
तथोपमान् जानथ सर्वधर्मान् ॥१५॥

1 C विशुद्धे  2 B जलेन विद्यते तथैव ; C ०लेन चिन विद्यते  3 C तल्लक्षणं
4 B वाद्येन तथैव चोदिते  5 A & C ०तूकः  6 A गीराय
7 A प्रतिबुद्धमन्तः ; B सुपिनान्ति सेविया प्रतिबुद्धसेतुः ; C सुपिनाति प्रतिबुद्धसत्त्वः
8 A & C स बाल कामेष्वतिकामलाभी

[रूपान् यथा[1] निर्मिणि मायकारो
हस्तीरथान]श्वरथान् विचित्रान् ।
न चात्र कश्चिद् यथ तत्र दृश्यते
तथोपमान् जानथ सर्वधर्मान् ॥१६॥

यथा कुमारी सुपिनान्तरस्मिन्
सा [पुत्र जातश्च[2] मृतश्च पश्यति ।
जातेऽतितुष्टा मृते] दौर्मनःस्थिता
तथोपमान् जानथ सर्वधर्मान् ॥१७॥

[यथा मृतां मातरमात्मजं वा
स्वप्ने तु वै रोदिति उच्चशब्दम्[3] ।
न तस्य माता म्रियते न पुत्र-
स्तथोपमान् जानथ सर्वधर्मान्] ॥१८॥

यथैव रात्रौ जल चन्द्र दृश्यते
अच्छस्मि वारिस्मि अनाविलस्मि ।
[अग्राह्य तुच्छो जल चन्द्रशून्य
तथोपमान्] जानथ सर्वधर्मान् ॥१९॥

यथैव[4] ग्रीष्माण मध्याह्नकाले[5]
तृषाभितप्तः पुरुषो व्रजेत ।
मरीचिकां पश्यति तो[यराशिं
तथोपमान् जानथ सर्वधर्मान्] ॥२०॥

1 B रूपाख्यथो
2 B स्वपुत्र जातश्च
3 B उच्चशब्दा
4 C यथापि
5 A मध्यान्त०

[मरी]चिकायामुदकं न विद्यते
स मूढ सत्त्वः पिवितुं[1] तदिच्छति ।
अभूतवारिं पिवितुं न शक्यते[2]
तथोपमान् जानथ सर्व[धर्मान् ॥२१॥
यथैव आर्द्रं कदलीय स्कन्धं
सारा]र्थिकः पुरुषु[3] विपाटयेत ।
बहिर्वा[4] अध्यात्म न सारमस्ति
तथोपमान् जानथ सर्वधर्मान् ॥२२॥
न चक्षुः प्र[माणं[5] न श्रोत्र घ्राणं
न जिह्व प्रमाणं[6] न काय चित्तम्] ।
प्रमाण यद्येत भवेयुरिन्द्रिया
कस्यार्यमार्गेण भवेत कार्यम् ॥२३॥
यस्मादिमे[7] इन्द्रिय अप्रमाणा
जडाः[8] स्वभा[वेन अव्याकृताश्च ।
तस्माद् य निर्वाणपथैव अर्थि]कः[9]
स आर्यमार्गेण करोतु कार्यम् ॥२४॥
पूर्वान्तु कायस्य अवेक्षमाणो[10]
नैवात्र कायो[11] नपि कायसंज्ञा ।

1 A स्वमूढसत्त्वः पिबतुं त०
2 B & C शक्यं
3 B ०स्कन्धं सरार्थिकः ; C ०रिक पुरुषु
4 A बहिर्द्ध ; C ०र्ध
5 B प्रामाण्यू ; C न चक्षु ब्रा०
6 B प्रामाण्यू
7 A तस्मा०
8 B जेत्राः स्व० ; C जनाः स्व०
9 A अर्थिकाः ;
10 A अवेक्ष्यमाणो ; B पूर्वादिकार्ये च अवेक्षमाणो ; पूर्वान्तिकायस्य अवेक्षमाणो
11 C नैवात्राकायो०

न यत्र [कायो नपि कायसंज्ञा
असंस्कृतं गोत्रमिदं] प्रवुच्यति[1] ॥२५॥
[2]निवृत्तधर्माण न अस्ति[3] धर्मा
येनेति नास्ति न ते जातु अस्ति[4] ।
अस्तीति नास्तीति च कल्पनावता-
मे[वं चरन्तान न दुःख[5] शाम्यति ॥२६॥
अस्तीति] नास्तीति उभेऽपि अन्ता
[शुद्धी] अशुद्धीति इमेऽपि अन्ता[6] ।
तस्मादुभे अन्त विवर्जयित्वा
मध्येऽपि स्थानं न करोति पण्डितः ॥२७॥
[अस्तीति नास्तीति विवाद एष
शुद्धी अ]शुद्धीति[7] अयं विवादः ।
विवादप्राप्तान न दुःख शाम्यति[8]
अविवादप्राप्तान दुःखं निरुध्यते[9] ॥२८॥
स्मृतेरुपस्थान[10]कथां कथि[त्वा
मन्यन्ति बाला वय कायसाक्षी] ।

1 A असंस्कृता गो० ; B प्रवुचति
2 B & C निर्वृत्ति०
3 C ०धर्मा न अस्ति
4 Tib. 44b. 1. 3: གང་ཕྱིར་འདི་མེད་ནས་ཡང་ཡོད་མི་འགྱུར།
5 A एवं चरन्तो नर दुःख
6 C शुद्धति इमेपि मुक्ताः
7 A शुद्धीत्वशुद्धीति
8 C ०न दुःखं न शाम्यते
9 A न दुःख विरुध्यते ; cf. *Mādhyamikavṛtti*, p. 135
10 C स्मृती उपस्थान०

न कायसाक्षिस्य च अस्ति [म]न्यना
प्रहीण तस्यो पृथु सर्व मन्यना ॥२९॥
चतुर्षु [ध्यानेषु] कथां कथित्वा
वदन्ति बाला वयं ध्यानगोचराः ।
न क्ले[शध्यायिन च अस्ति मन्यना
विदि]त्व ज्ञानेन मदः प्रहीयते ॥३०॥
चतुर्षु सत्त्वेषु[1] कथां कथित्वा
वदन्ति[2] बाला वय [3]सत्यदर्शिनः ।
न [4]सत्यदर्शिस्य च कांचि मन्य[ना
अमन्यना सत्य जिनेन देशिता ॥३१॥
रक्षेत] शीलं न च तेन मन्ये
श्रुणेय्य धर्म[5] न च तेन मन्ये ।
येनैव सो मन्यति अल्पप्रज्ञो
तन्मूलकं दुःख विवर्धतेऽस्य ॥३२॥
दुःखस्य मूलं म[दु[6] सन्निदर्शितं
सर्वज्ञिना[7] लोकविनाय]केन ।
मदेन मत्तान दुःखं प्रवर्धते[8]
अमन्यमानान दुःखं निरुध्यते ॥३३॥

1 C वाक्येषु
2 A drops वदन्ति
3 A वयं सत्य०
4 C नन्यद०
5 A शून्येष्वधर्मे
6 Tib. 45a, l. 4: དྲེགས་པ = pride
7 B सर्वज्ञना
8 C विवर्धते

किंयद्‌बहून् धर्म पर्यापुणेय्या
    शीलं[1] न रक्षेत श्रुतेन मत्तः[2] ।
[न बाहुश्रुत्येन स शक्यु तायितुं[3]
    दुःशील] येन व्रजमान दुर्गतिम् ॥३४॥

स चेत् पुनः शीलमदेन मत्तो
    न बाहुश्रुत्यस्मि करोति योगम् ।
क्षयेत्व[4] सो शीलफलमशे[षं
    पुनोऽपि स प्रत्यनुभोति दुःखम् ॥३५॥

किञ्चापि] भावेय्य समाधि लोके
    न चो विभावेय्य[5] स आत्मसंज्ञाम् ।
पुनः प्रकुप्यन्ति किलेशु[6] तस्य
    यथोद्रकस्येह[7] समाधिभा[विना ॥३६॥

नैरात्म्यधर्मान्[8] यदि प्रत्यवेक्षते
    तान्] प्रत्यवेक्ष्य यदि भावयेत ।
स हेतु निर्वाणफलस्य प्राप्तये
    यो अन्यहेतुर्न[9] स भोति[10] शान्तये ॥३७॥

1 B adds निरुध्यते विवर्धतेऽस्य दुःखस्य मूलं मदुसन्निदर्शितः । सर्वज्ञनालोकविनायकेन मदेन मत्तान दुःखं प्रवर्धते । कियद्बहू धर्म पर्यापणोय्या शीलं

2 A मन्तः    3 Tib. 45a, l. 6: སྐྱོབ་མི་ནུས །

4 C त्तमेत्व    5 Tib. 45a, l. 7: གཞིག་མི་བྱེད །

6 A क्रियेषु ; C किलेश    7 Tib. 45b, l. 1: ལྷག་སྤྱོད=उद्रकः

8 B निरात्मधर्मान्    9 A अनन्य हेतुर्न    10 A भोतु

यथा नर[श्चौर[1]गणैरुपद्रुतः
पलायितुमिच्छति जीविता]र्थिकः ।
न तस्य पादाः प्रभवन्ति गच्छितुं
गृहीत्व चौरेहि[2] स तत्र हन्यते ॥३८॥

एवं नरः शीलविहीन मूढः
पलायितुम् [इच्छति संस्कृतातः ।
स शीलहीनो न प्रभोति गच्छि]तुं
जराय व्याध्या[3] मरणेन हन्यते ॥३९॥

यथैव चौराण बहू सहस्रो[4]
नानामुखेहि[5] प्रकरोति पापम् ।
एवं किले[शा विविधैर्मुखेभि-
र्यथैव चौरो हनि शुक्लपाक्षम्[6] ॥४०॥

येन[7]] सुनिध्याप्तु[8] निरात्मस्कन्धा
आक्रुष्टु[9] परिभाष्टु[10] न शक्नु भोति ।

1 B ०श्चोर० 2 B चोरेहि

3 B जराय व्याध्याः ; C भुञ्जराय व्याधी

4 B चोरगण बहू सहस्रा ; C चोराह बहु सहस्र

5 B नानामुखेही ; C नानामुखै हि

6 A शुक्लपक्षम्; B रोहारनि शुक्लपाक्षम् ; Tib. 45b, l. 5:

དེ་བཞིན་ཉོན་མོངས་ སྣ་ཚོགས་དུ་མ་ནས །
མི་རྒོད་ བཞིན་དུ་ དགེ་བའི་ཕྱོགས་ རྣམས་འཇོམས ॥

7 B येनु 8 C सुनिध्यप्तु ; Tib. 45b, l. 5: རབ་ བརྟགས་ ཏེ །

9 Tib. 45b, l. 6: སྨོས་ཤིང་བརྒྱད་ ཀུང་ཞུམ་པར་ མི་ འགྱུར་བ།

10 A परिद्रष्टु

स क्लेशमारस्य[1] वशं न गच्छते
यः शून्यतां जा[नति सो न कुप्यते ॥४१॥
बहू जनो भाषति स्कन्धशू]न्यतां
न च प्रजानाति[2] यथा निरात्मकाः[3] ।
ते अप्रजानन्त परेहि चोदिताः
क्रोधाभिभूताः परुषं वदन्ति ॥४२॥
यथा नरो आतु[रुकाय[4] दुःखितो
बहुहि[5] वर्षेहि न जातु] मुच्यते ।
स दीर्घगैलान्य दुःखेन[6] पीडितः
पर्येषते वैद्यु चिकित्सनार्थिकः ॥४३॥
पुनः पुनस्तेन गवेषता च
आसादितो वै[द्यविदु विचक्षणः ।
कारुण्यतां तेन उपस्थ]पेत्वा[7]
प्रयुक्तु भैषज्यमिदं निषेव्यताम्[8] ॥४४॥
गृहीत्व भैषज्य पृथुं वरां वरां[9]
न सेव[ते आतुरु येन मुच्यते] ।
न वैद्यदोषो[10] न च भैषजानां
तस्यैव दोषो भवि आतुरस्य ॥४५॥

1 A संक्लेश० ; C अक्लेश० 2 A & B प्रजानन्ति 3 A निरात्मिकाः
4 Tib. 45b, l. 5 : ཞིང་ལུས་ 5 B बहूनि
6 A & B शैलान्य० 7 B उपस्थयित्वा
8 B भैषज्यमदन्निषे० ; C ०निषेवताम् 9 B पृथु वराणां
10 C पृथूत्वरा त्वरा नुपनामये वैद्यु तदातुरस्य न सेव...हि तस्मि काले न वैद्यदोषो

एवमिह[1] शासनि प्रव्रजित्वा
पर्यापुणित्वा ब[लध्यान इन्द्रियान्[2] ।
न भावनाया]मभियुक्त भोन्ति
अयुक्तयोगीन कुतोऽस्ति निर्वृतिः[3] ॥४६॥
स्वभावशून्याः सद सर्वधर्मा
वस्तुं विभावेन्ति जिनान पुत्राः ।
सर्वेण स[र्वं भव[4] सर्वशून्यं
प्रादेशिकी शून्यता] तीर्थिकानाम्[5] ॥४७॥
न विज्ञ बालेहि[6] करोन्ति विग्रहं
सतकृत्य बालान्[7] परिवर्जयन्ति ।
[ममान्ति]के एति प्रदुष्टचित्ता[8]
न बाल[धर्मेहि करोति संस्तवम्[9] ॥४८॥
न विज्ञ बालान करोति] सेवनां
विदित्व बालान स्वभावसन्ततिम् ।
कियच्चिरं बालु सुसेवितोऽपि[10]
पुनोऽपि ते[11] भोन्ति अमित्रसन्निभाः ॥४९॥
न विज्ञ बा[लेष्विह विश्वसन्ति
विज्ञाय बालान स्वभा]वधर्मताम् ।

1 A & C एवमिहौ 2 B चलध्यान इन्द्रियाः 3 A & B निर्वृतः
4 B सर्वभव० 5 C भवतीर्थिकानाम् 6 C लाभेहि
7 B बालाम्परि० ; C बालाः परि०
8 Tib. 46b. I. 6: ཞེ་སྡང་སེམས་ཀྱིས། 9 B संस्तवः
10 B सुसेवितापि ; C असेवितापि 11 C पुरतो हि ते

स्वभावभिन्न प्रकृतीय बाला
न चास्ति मित्रं हि पृथग्जनानाम् ॥५०॥
सहधर्मिकेनो वचनेन उक्ताः[1]
क्रोधश्च दोषश्च[2] [अप्रत्ययश्च ।
प्राविष्करोन्ति इमि बाल]धर्मा[3]
इममर्थु विज्ञाय न विश्वसन्ति ॥५१॥
बाला हि बालेहि[4] समं समेन्ति
यथा अमेध्येन अमेध्यु सार्धम् ।
विज्ञाः पुनर्वि[ज्ञजनेन सार्धं
समेन्ति सर्पिर्यथ सर्पिमण्डैः[5]] ॥५२॥
संसारदोषाण[6] अप्रत्यवेक्षणात्
कर्माण विपाकुमनाचरन्तः[7] ।
बुद्धान चो वाक्यमश्रद्दधाना[8]-
स्ते च्छेद्यभेद्यस्मि [चरन्ति बालाः ५३॥
सुदुर्लभं लभ्य मनुष्यलाभं
न] शिल्पस्थानेषु[9] भवन्ति कोविदाः ।

1 B ॰धर्मि तेनो वचनेन उक्तः; C ॰धर्मि येनो वचने उक्ताः 2 A रोषश्च
3 B बालधर्मान् 4 C बालान बाला बलेभि
5 B ॰मराडे 6 B संस्कार॰
7 B संस्कार दोषाण अप्रत्यवेक्षणा कर्माण विपाकमनो तरन्ता; C मनोन्तरन्ता
8 A वोवाद्य न श्रद्दधाना॰ 9 A ॰लाभमशिल्प॰

दरिद्रभूतान धनं न विद्यते
अजीवमानास्तद[1] प्रव्रजन्ति ॥५४॥
ते प्रव्रजित्वा इह [बुद्धशासने
अध्युषिता[2] भोन्तिह पात्रचीवरे ।
ते पा]पमित्रेहि[3] परिगृहीता-
स्तां नाचरन्ते सुगतान शिक्षाम्[4] ॥५५॥
ते आत्मनः शीलमपश्यमाना-
श्चित्तव्यवस्थां न[5] [लभन्ति बालाः ।
रात्रिन्दिवं भोन्ति अयुक्तयोगा
न ते जु]गुप्सन्ति च पापकर्मतः[6] ॥५६॥
कायेन चित्तेन असंयतानां[7]
न किञ्चि वाचाय स [8]जल्पितव्यम्[9] ।
सदा गवेषन्ति[10] परस्य दोषान्[11]
[अपराद्धु किं केन[12] वा चोदयिष्ये ॥५७॥
आहारि अध्युषित] भोन्ति बाला[13]
न चास्ति मात्रज्ञतु[14] भोजनस्मिन् ।

1 C आजीवमाना सद ; Tib. 46b.1.5: དེ་ནས་འཚོ་བ་མེད་རས་པབ་དུ་འབྱུང་། 2 B अध्योषिता 3 A ०मित्रेण ; C ममित्रेहि
4 C ०स्त्याना च० ; B ०स्तां नाचरन्ति सुगतान शिक्षान्
5 C ०श्चित्तस्य व्यवस्थं न 6 A पापकर्म ; C ओप्सन्ति च पापकर्माः
7 A असंय्यतानाः ; C कालेन चित्तेन सुसंय० 8 A न ज० ; C अजल्पि०
9 Tib. 47a. 1.: དེ་ནི་ཚིག་དུ་མི་སྨྲ་ཅི་ཡང་མེད། 10 C गवेष्यन्ति
11 B दोषं 12 B पराद्धु किन्तेन त ; A केन न 13 B आहारिमध्योऽपि भोन्ति बाला ; C बाल भोन्ति 14 B ०ज्ञत भोज० ; C ०ज्ञान भोज०

बुद्धस्य पुण्येहि लभित्व भोजनं
तस्यैव बाला अकृतज्ञ भोन्ति ॥५८॥
ते [भोजनं स्वादुरसं प्रणीतं
लब्ध्वा च[1] भुञ्जन्ति अ]युक्तयोगाः ।
तेषां स आहारु वधाय भोति
यथ [2]हस्तिपोतान विशा[3] अधौतकाः ॥५९॥
किञ्चापि विद्वान् मतिमान् विचक्षणो
भु[ञ्जीत आहारु शुचि प्रणीतम्[4] ।
न चैव अध्यु]षित[5] तत्र भोति[6]
अगृध्नु[7] सो भुञ्जति युक्तयोगी[8] ॥६०॥
किञ्चापि विद्वान् मतिमान् विचक्षणो
आभाषते बालु कुतो हि स्वागतम् ।
[तथ संगृहीत्वा प्रियवद्यताय
का]रुण्यतां तत्र उपस्थपेति ॥६१॥
यो भोति बालान हितानुकम्पी
तस्यैव बाला व्यसनेन तुष्टाः ।
एतेन दोषेण [जहित्व बालान्
मृगोवदेको[9] विहरे]दरण्ये ॥६२॥

1 A लुब्धा ; B न भोजनस्वादनसंप्रणीती लब्ध्वा च
2 B भोत्तीयिथ हस्ति०
3 B विसा ; C विषा
4 B सुविप्रणीतम्
5 B सवैव अध्योषित
6 C भोन्ति
7 A अगृद्धु ; B अगृद्ध
8 C तत्र योगी
9 B दोषेय जनित्व बाला मृगेव एको

इमीदृशान्[1] दोष विदित्व पण्डितो
न जातु बालेहि करोति संगतिम्[2] ।
[3]विहीनप्रज्ञानुपसेवतो मे
स्वर्गात्तु हा[निः कुत बोधि लप्स्ये[4] ॥६३॥
मैत्रीविहारी[5] च] भवन्ति पण्डिताः
करुणाविहारी मुदिताविहारी ।
उपेक्षकाः[6] सर्वभवेषु नित्यं
समाधि भावेत्व स्पृशन्ति बोधिम् ॥६४॥
ते[7] बोधि [बुद्धित्व शिवामशोकां
विदित्व सत्त्वान् जनव्याधिपीडितान् ] ।
कारुण्यतां तत्र उपस्थपेत्वा
कथां कथेन्ति परमार्थयुक्ताम् ॥६५॥
ये तां[8] विजानन्ति जिनान ध[र्मता-
मनाभिलप्यं सुगतान सत्यम् ।
ते धर्म श्रुत्वा इम एव]रूपां
लप्स्यन्ति क्षान्ति अरियां निरामिषाम्[9] ॥६६॥

[इति श्रीसमाधिराजे[10]गम्भीरधर्मक्षान्तिपरिवर्तो नाम नवमः[11] ॥९॥]

1 B इम ई० ; C मम ई०    2 A & B संस्तवम्
3 B न हीन ; C निहीन    4 B स्वर्गात्तुहानिः कुत बोधि लप्स्यते
5 B वीहारीकं च    6 C उपेक्षकः    7 A स
8 A येनां    9 B अनिया निरामिषाम् ; C ०रूपा लप्स्यन्ति अरियं निरामिषाम्
10 B drops इति श्रीसमाधिराजे    11 A गम्भीरधर्मक्षान्तिपरिवर्तो नवमः

# दशमपरिवर्तः

[तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म]। तस्मात्तर्हि कुमार [प्रति]पत्तिसारो भविष्यामीत्येवं त्वया कुमार [सदा शिक्षितव्यम्। तत् कस्य हेतोः। प्रतिपत्तिसारस्य] हि कुमार बोधिसत्त्वस्य महासत्त्वस्य न दुर्लभा भवत्यनुत्तरा सम्यक् सम्बोधिः किं पुनरयं[1] समाधिः। अथ खलु चन्द्रप्रभः कुमार-[भूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्त-मेतदवोचत्। आश्चर्यं भग]वन्[2] यावत् सुभाषिता चेयं भगवता[3] बोधिसत्त्वानां महासत्त्वानामववादानुशासनी सर्वबोधिसत्त्वशिक्षा देशिता स्वाख्याता [सुप्रज्ञप्ता[4]। सर्वतथागतगोचरोऽयं भगवन् यत्र अ]भूमिः सर्वश्रावकप्रत्येकबुद्धानां कः पुनर्वादोऽन्यतीर्थिकानाम्। प्रतिपत्तिसाराश्च वयं भगवन् भविष्यामोऽनपे[क्षाः कायजीविते च भूत्वा तथागतस्यानु]शिक्षिष्यामहे[5]। [तत् कस्य हेतोः। शिक्षितुकामाश्च[6] वयं भगवंस्तथागतस्य अभिसंबोद्धुकामा वयं भगवन्ननुत्तरां सम्यक्सम्बोधिम्]। अर्थिका[7] वयं[8] भगवन्ननुत्त-

1 A किमङ्ग पुन॰ ; B किमतः पुन॰ 2 B भगवान्

3 A adds भगवतार्हता सम्यक्सम्बुद्धेन प्रतिपत्तिसमाध्यवतारः सुदेशितः सुप्रज्ञप्तः ; B भगवता तथागतेनार्हता 4 B देशिता स्वाध्यायाः ख्याताः सु॰

5 B ॰पेक्षाः कायजीविता भूत्वा तथागतेभ्योऽनुशिक्षि॰ 6 B drops च

7 B अनर्थिका वयं 8 A & C ॰ननुत्तरां सम्यक्संबोधिम्

रायाः सम्यक्संबोधेः[1]। विध्वंसयितुकामाश्च वयं भगवन् मारं पापीयांसम्। मोचयि[तुकामा[2] वयं भगवन् सर्वसत्त्वान् सर्वभयेभ्यः[3]] सर्वदुःखेभ्यः। अधिवासयतु[4] मे भगवान् श्वस्तने मम गृहे भक्तं

1 A ०न्नुत्तरायां सम्यक्संबोधौ ; C ०वन्नुत्तरायाः सम्यक्संबोध्याः

2 B मारः पापीयान् स तं मोच०  3 B ०सत्त्वान् सर्वरूपेभ्यः सर्व०

4 A सर्वदुःखेभ्यः। ददातु मे भगवान् मूर्ध्नि दक्षिणं पाणिम्। तत्रेदमुच्यते

खसमा विरजा वररूपधरा अशरीर अलक्षण प्रज्ञशून्या।

सशरीर गुणोदधि कारुणिका दद मूर्ध्नि पाणि अप्रतिमा॥

एवमुक्ते भगवाननेककुशलमूलनिर्गतं विचित्रलक्षणालङ्कृतं दिव्यं सुवर्णवर्णं दक्षिणं पाणिं चन्द्रप्रभस्य कुमारभूतस्य मूर्ध्नि स्थापयामास। समनन्तरेण स्थापिते च भगवता चन्द्रप्रभस्य कुमारभूतस्य मूर्ध्नि दक्षिणे पाणावथ तत्क्षणमेव चन्द्रप्रभस्य कुमारभूतस्य सर्वरूपसंदर्शन-मनोजव-गगनगंज--वज्रोपम-शूरंगमानावरणकोटी--सर्वतथागतसंदर्शन-सर्वशून्यताभिषेकप्राप्तप्रमुखान्यनेकानि प्रज्ञापारमितानिर्जातानि समाधिकोटिनियुतशतसहस्राणि अनभिलाप्यान्यभिमुखीभूतान्यभूवन्। अनेकानि च धारणीविमोक्षमुखान्यभिमुखीभूतान्यभूवन्। दिव्यं चानौपम्यमुदारमचिन्त्यं सर्वबुद्धबोधिसत्त्वगोचरविदितं यत्तदार्या आचक्षते प्रीतिसुखं तत् प्रतिलब्धवान्। [Cf. Tib. 49a, l. 1-2: དགའ་བ་དང་བདེ་བ་གང་འཕགས་པས་བརྗོད་པ། ༀ་ལུས་པ etc.]

तत्रेदमुच्यते

जालावनद्धरुचिरं कलशाङ्कुशाङ्कं श्रीवत्सचक्रध्वजमीनपताकचित्रम्।

बहुकल्पकोटीरतनान विसर्गशौण्डं चन्द्रप्रभस्य भगवान् ददि मूर्ध्नि पाणिम्॥

अथ खलु चन्द्रप्रभः कुमारभूतो दिव्येनानौपम्येनाचिन्त्येनोदारेण सर्वबुद्धबोधिसत्त्वगोचरविदितेन प्रीतिसुखेन समन्वागत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तं सारूप्याभिर्गाथाभिरभ्यष्टावीत्।

नमोऽस्तु ते अभयददा अनुत्तरा नमोऽस्तु ते परहितसत्त्वबान्धवा।

नमोऽस्तु ते दशबलसत्यविक्रमा नमोऽस्तु ते असमसमा तथागता॥

भोक्तुं सार्धं बोधिसत्त्वगणेन सार्धं भिक्षुसङ्घेन चानुकम्पामुपादाय[1]। [अधिवासयति स्म भगवां]श्चन्द्रप्रभस्य कुमारभूतस्य तूष्णीम्भावेन श्वस्तने गृहे भक्तं[2] भोक्तुं सार्धं [बोधिसत्त्वगणेन] भिक्षुसङ्घेन चानुकम्पामुपादाय[3]। अथ [खलु चन्द्रप्रभः कुमारभूतो भगवतस्तूष्णीम्भावेना]धिवासनं[4] विदित्वा उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य [भगवतोऽन्तिकात् प्राक्रामत्]।

वन्दे नाथं अतिकारुणिकं वन्दे शूरं चतुरारिजितम्।
वन्दे वीरं परमार्थविदं वन्दे देवं वरधर्मतनुम्॥
सुविशालप्रज्ञ नभमण्डलोदितं कृपमैत्ररश्मिजिनसूर्यसूदनम्।
सुगम्भीरधर्मपरमार्थदेशकं शरणं गतोऽस्मि तव देव नित्याहम्॥

अथ खलु चन्द्रप्रभः कुमारभूतो भगवन्तं सारूप्याभिर्गाथाभिरभिष्टुत्य भगवन्तमेतदवोचत्। अधिवासयतु

B has the following variants in the above passage :

सर्वदुःखेभ्यः। ददातु...प्रज्ञसूता। सुगम्भीरगुणोदधि...दद मूर्ध्नि पाणि मम अप्र......मूलः निजं...दिव्यं...समनन्तरस्थायिनि च भगवता...मनोजगगनगञ्जवक्त्रो...निर्जातान्यनेकानि समाधिकोटिनियुतशतसहस्राणि अभि...विमोक्षपदान्यामुखी...मुदारं सर्वबुद्ध...दार्या वक्ष्यते।...मालावनद्ध...कलनालकुणाकं...रतदान...षण्डं...स्थवि मूर्ध्नि पाणिम्...दिव्येनाचिन्त्येनो......रभ्यष्टावीत्।... अभय......धर्मतन्तुं...प्रज्ञ न प्रज्ञ नभ......सूर्यदानम्। सु......नित्यहम्

1 A & B add here तत्रेदमुच्यते।

अभियाचमि सप्तुनरेन्द्र शुचि मम मन्दिर भुञ्जीतु भक्तम्।
अधिवासयतु सुरवरनाथो मय्यनुकम्पयमान मुनीन्द्रो॥

2 B स्वश्चेतनया ; C श्वश्वेतनया भक्तं

3 B सार्धं बोधिसत्त्वसङ्घेन चानु° ; C भोक्तुं सार्धं भिक्षुसङ्घेनानुकम्पा°

4 A & C °वासनां

[ अथ खलु ] चन्द्रप्रभः कुमारभूतो[1] येन राजगृहं महा-

1 A आक्रामत्। अथ खलु चन्द्रप्रभः कुमारभूतो गृध्रकूटात् पर्वतादवतीर्य तस्यां वेलायां यावच्च राजगृहं महानगरं यावच्च गृध्रकूटः पर्वतराजोऽत्रान्तरे सर्वं मार्गं समं कारयति स्म। विपुलं विस्तीर्णमपगततृणस्थाणुकण्टकपाषाणशर्करकठल्लं शुचिवालुकासंस्तीर्णं रमणीयं मृदुकाचिलिंदिकसुखसंस्पर्शं दिव्योत्पलकुमुदसौगन्धिकातिमुक्तकमल्लिकाचम्पकपाटलकुन्दतिल-केशराशोकादिभिः सर्वैः सर्वर्तुकैः पुष्पवरैः संच्छन्नमवसक्तपट्टदामकलापं माल्यदामालङ्कृतं नानारत्नधूपघटिकावलम्बितपार्श्वं सर्वाश्च ता रत्नधूपघटिकाः कालागुरुपरिपूर्णा धूमायन्ते स्म। समुच्छ्रितं छत्रध्वजपताकावैजयन्तीदिव्यरत्नतोरणवितानं देशे देशे च नटनर्तकान् दिव्यनृत्यगीतवाद्यसुनिबद्धान् सुशिक्षितान् निवेशयन्ति स्म। अनेकाश्च तूणवपणव-वीणावेणुमृदङ्गमुकुन्दमुरुजोपेताः स्त्रीपुरुषदारकदारिकाः स्वलङ्कृताः स्थापयन्ति स्म। मार्गस्य चोभयपार्श्वयोर्दिव्यान् जाम्बूनदसुवर्णमयान् नानारत्नकिङ्किणीजालावनद्धमुखरालङ्कृतान् तुङ्ग-तालान् नानारत्नमयान् अनेकानि च व्योमकोटीनियुतशतसहस्राणि सप्तरत्नमयांश्च नानावृक्षान् नानारोहपरिणाहसम्पन्नान् सर्वर्तुकपत्रपुष्पफलोपेतान् स्थापयन्ति स्म यदुत भगवतः पूजा-कर्मणे। तत्रेदमुच्यते

सुप्रतिमण्डितमार्गविचित्रसमुच्छ्रितच्छत्रपताकवितानम्।
सुप्रतिनादिततूर्यरवेण तथपि च गीतरवेण मनोज्ञम्॥
नटनर्तकनारिगणैर्बहुभिः सुविचित्रवस्त्रनियुतैर्विविधैः।
ससुगन्धिचित्रकुसुमैश्च वरैः प्रतिमण्डितो विपुल मार्गवरः॥
मण्डित मार्ग उदार विशाल चन्द्रप्रभेण प्रसाद जनित्वा।
बुद्ध प्रवेक्ष्यति पुरवर इह शुचि कारुणिको मुनिचन्द्रः॥
शुचिवालिकसंस्तृतो दिव्यं छादितो पुष्पवरैः सुमनोज्ञैः।
सुसमुच्छ्रितो तोरण रत्नवरैर्भासति मार्ग पुरेव अमराणाम्॥
तथ लङ्कृतो मार्ग विचित्रं चन्द्रप्रभेण प्रहृष्टमनेन।
यं दृष्ट्वा सुरासुरनागा विस्मय जात अहोति भणन्ति॥
ताला स्थापित पार्श्वयोर्वरवरास्तुङ्गा सजाम्बूनदा
नद्धाकिङ्किणिजालरत्नमुखरा वृक्षा बहु नैकशः।

नगरं[1] येन [ च ] स्वकं[2] निवेशनं तेनोपसमक्रामत्। उपसंक्रम्य

तथ स्थापित रत्नवृक्षनियुताः सर्वर्तुकाः पुष्पिता-
स्तेहि मार्गवरो विभाति विपुलः स्वर्गे यथा नन्दनम् ॥
व्योमापि रतनामयाः सुरुचिरा ज्वालावलीभास्वरा
मार्गे स्थापित पार्श्वयोर्निरुपमास्तुङ्गाः पृथु संहताः।
येहि शोभितु मार्ग मण्डित महान् विभ्राजते सर्वतो
येनो राजगृहं प्रवेक्ष्यति पुरं बुद्धस्त्रिलोकाधिपः ॥
रत्नघण्टा अवलम्बितपार्श्वास्ते च पूरित कालगुरूणाम्।
उच्छ्रिति धूपघनेव घटेषु दिव्य विकार सुगन्धि विचित्राः ॥
पृथु भूषित निरुपम दिव्यं चन्द्रप्रभेण जिनस्य कृतेन।
यावत नगरि तोय दुवारं यावत गृध्रकूटो गिरिराजा ॥

In Ms. B. there are a few variants which are indicated below :

B प्राक्रामत्। अथ...विस्तीर्णमपद्मकुमुदपुण्डरीकसौगन्धिकातिमुक्तक...कुन्दतिलककेशरा-शोका......कलापमाल्य......घटिका......रत्न......का अगुरुपूर्णा धूपायन्ते। समुच्छ्रितं छत्रध्वज......वितानं देशे देशे च......र्तकान् नर्तनगीत......सुनिवद्धसुशि...शयति स्म। ......तूणववीणावेणुमृदङ्गमुकुन्द......दारिकाः......स्वलङ्कृताः स्थापयति स्म। मार्गस्य चोभयपार्श्वयोर्दिव्या......मया...जालावनद्धमुखेनावृतानुत्तुङ्गोत्तालान् नानारत्नमयान्यनेकानि व्योम...नानापरिणाहसम्पन्नान् सर्वर्तुकपुष्पपत्र...स्थापयति स्म।...मुच्यते।...नारिगणो वहुभिः सुविचित्रवस्त्रनि...विधैः। ससुगन्धि...मण्डितु मात्त उदारु...प्रसादु...।...क्ष्यति... पुरवरु तेन सुचि इह कारु...। सुचि...संस्तृतु......छादितु पुष्पवलैः...।...छ्रितु...मात्तपुरे मराणो। तथ लङ्कृतु मार्गु...मेण प्रह्वमनेन। यत्त ते दृष्ट्वा ससुरासुर...जात अहोति भणन्ति। ताला...वरवरन्तुङ्गा सजम्बूनदा।...किङ्किणिरत्नजालमुखरावृत्ता बहूनैकशः।... सर्वर्त्तुका पु...व्यौमापी रन्तनामयाः...ज्वाला...पृथुसहका।...ही मण्डितु मार्गु शोभितु महावि...बुद्धस्त्रिकाला...घटा...पार्श्वस्ते...उत्थित धूपघटेषु दिव्यु विकारु सुगन्धिचित्रो।... भूषितु...पमु...यो च न तेरित पोतदुवारं सो वच...।

1 A ०भूतोऽत्रान्तरे सर्वं मार्गमनेकविचित्रविकारप्रकारव्यूहं मार्गमलङ्कृत्य येन ; B ०भूतोऽवान्तरसर्वमार्गमनेकविचित्ररत्नविकारप्रकामव्यस्तमार्गमलङ्कृतं कृत्वा गृध्रकूटात् पर्वता-दवतीर्य येन

2 A & B add येन दिव्यतुङ्गविशालोदारं स्वं

चन्द्रप्रभः [स्वगृहं[1] प्राविशत्। प्रविश्य च[2] तामेव रात्रिं प्रभूतं प्रणीतं] खादनीयं भोजनीयं स्वादनीयमभिसंस्कारयति स्म[3]। शतरसञ्च भोजनं सम्पाद्य तस्या[4] एव[5] रात्र्या अत्ययेन राजगृ[हं महानगरं सुसिक्तं सुसंमृष्टं मुक्त]कुसुमाभिकीर्णं[6] गन्धघटिका-

1 A तेनोपजगामोपेत्य स्व० ; B ०नगरं येन च दिव्यः तुङ्गविशालोदारः स्वनिवेशनस्तेनोपजगाम यत्र स्वनिवेशनं    2 B drops च

3 B drops स्म    4 C drops तस्या

5 A & B सम्पादयित्वा तस्या एवं

6 A ०मसुसमाकीर्णं धूपनधूपितं वितानविततमवसक्तपट्टदामकलापं समुच्छ्रितच्छत्रध्वजपताकमेवं राजगृहं महानगरं सरथ्यान्तरापणमपगतपाषाणशर्करकठल्लं विचित्रपुष्पाभिकीर्णं चन्दनचूर्णाभिकीर्णं गवाक्षतोरणनिर्यूहपञ्जरजालार्धचन्द्रसमलङ्कृतं चन्दनानुलिप्तमकार्षीत्। इत्येवमपरिमाणया व्यूहया राजगृहं महानगरं समलङ्कृत्य स्वञ्च गृहमनेकालङ्कारविचित्रप्रकारविभूषितमनेकरत्नहारविकारप्रलम्बितं दिव्यपट्टवस्त्रप्रतिमण्डितोपशोभितोपचारविविधविचित्रमाल्यदामालङ्कृतं च कारयति स्म। अनेकानि च रत्नमयान्यासनकोटीनियुतशतसहस्राणि प्रज्ञापयति स्म। मध्ये च भगवतो देवमनुष्यातिक्रान्तं दिव्यं सिंहासनं प्रज्ञापयति स्म। नानारत्नमयाश्च धूपघटिकाश्चतुर्दिशमवलम्बितास्तासु च शुद्धमगुरु धूमायते स्म यदुत भगवतः पूजाकर्मणे। दिव्यनृत्यगीतवाद्यनिनादितं समुच्छ्रितच्छत्रध्वजपताकमनेकदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्य-शतसहस्रसमूहावलोकितं विविधविचित्ररत्नपुष्पाभिकीर्णं चन्द्रप्रभः कुमारभूतस्तद्गृहमकार्षीद् यदुत भगवतः परिभोगाय। तत्रेदमुच्यते

सुप्रतिमण्डित गृहवर सर्वं चन्द्रप्रभेण उदार विशालम्।
दिव्यसिंहासन मध्य निविष्टं यत्र निवेक्ष्यति लोकप्रदीपः॥
आसनकोटीसहस्रमनन्ताः स्थापित रत्नमयाः सुविचित्राः।
येषु निषेत्स्यति सङ्घ गुरुस्य लोकप्रदीपकरस्य जिनस्य॥
अवलम्बित सर्वे दिशासु अगुरुप्रपूरित धूपघटाश्च।
रत्नमयास्तः सर्वे विचित्रास्तेषु च उच्छ्रति धूप मनोज्ञाः॥

निर्धूपितमुच्छ्रितच्छत्रध्वजपताकं धूपनधूपितं वितानविततमवसक्तपट्टदामकलापं सरथ्यान्तरापणमपगतपाषाणशर्करकठल्लं विचित्रपुष्पाभिकीर्णं चन्दनचूर्णाभिकीर्णं गवाक्षतोरणनिर्यूहपञ्जरजालार्धचन्द्रसमलङ्कृतं चन्दनानुलिप्तमकार्षीत् । सर्वावन्तं नगरमुत्पल-

बहु रत्न पुष्प रुचिरैर्विविधैः ससुगन्धिचित्रकुसुमैश्च वरैः ।
आकीर्ण वेश्म वर धरणीतलं च चन्द्रप्रभेण दशबलागमने ॥
नृत्तगायनवाद्यरवेण नादितु गृहवर सर्व समन्तात् ।
सूच्छ्रित छत्रपताकं भासति मन्दिरु मेरु यथैव ॥
आकीर्ण पूर्ण नरनारिगणैस्तथ नागयक्ष असुरैर्बहुभिः ।
अवलोकितश्च बहुदेवशतैश्चन्द्रप्रभस्य महाभवनवरम् ॥

अथ खलु चन्द्रप्रभः कुमारभूत इत्येवमपरिमाणया व्यूहया राजगृहं महानगरं समलङ्कृत्य स्वञ्च निवेशनं समलङ्कृतं कृत्वा च तस्या एव रात्र्या अत्ययेन प्रत्यूषकालसमये नानातूर्यशतैः प्रवाद्यमानैश्छत्रध्वजपताकाकोटीभिरत्युच्छ्रिताभिरशीत्या च बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्धं सर्वैर्दिव्यमान्दारवरपुष्परचिताञ्जलिपुटैः केचित्तत्र एकजातिप्रतिबद्धा बोधिसत्त्वा महासत्त्वा यदुतावलोकितेश्वर-महास्थामप्राप्त-गन्धहस्ति-रत्नकेतु-दुन्दुभिस्वर-दुरभिसम्भव-मञ्जुश्रीकुमारभूत-वीरसेन-सुबाहु-रत्नकुसुमामोघदर्शि-मैत्रेय-प्रभृतयः एतत्पूर्वंगमेन राजगृहं महानगरं समलङ्कृत्य स्वञ्च गृहमनेकालङ्कारविचित्रप्रकारविभूषितमनेकरत्नहारविकारप्रलम्बितं दिव्यवस्त्रप्रतिमण्डितं महता बोधिसत्त्वगणेन परिवृतः पुरस्कृतः अनारोहस्त्वलङ्कृतानेकहस्त्यश्वरथसमूहसंमिश्रया इतरयापि अपरिमाणया जनपदव्यूहया स्वयं च दिव्यमान्दारपुष्पभरिताञ्जलि महता बोधिसत्त्वानुभावेन महत्या बोधिसत्त्वर्द्ध्या महता बोधिसत्त्वविकुर्वितेन दिव्यमनोज्ञैर्मनोहरैर्बोधिसत्त्वहाहाकारकिलिकिलाप्रक्ष्वेडितशब्दैः श्रूयद्भिः राजगृहान्महानगरात् तथा तद्द्वारेण निष्क्रम्य येन गृध्रकूटपर्वतराजो येन भगवांस्तेनोपसमक्रामदुपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य दिव्यमान्दारवपुष्पाञ्जलिना भगवन्तमवकीर्य एकान्तेऽस्थात् । तेऽपि मैत्रेयप्रभृतयो बोधिसत्त्वा महासत्त्वा भगवतः पादौ शिरसाभिवाद्य भगवन्तं त्रिः प्रदक्षिणीकृत्य स्वाभिः स्वाभिर्दिव्यमान्दारवपुष्पाञ्जलिभिर्भगवन्तमवकीर्यैकान्ते तस्थुः । एकान्तस्थितश्चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवतः कालमारोचयति स्म । कालोऽयं भगवन् समयः

कुमुदपद्मपुण्डरीकाभ्यवकीर्णमकार्षीत्। स्वं [च गृहं] सर्वालंकार-व्यूहितमकार्षीत्। अथ खलु चन्द्रप्रभः कुमारभूत इमानेवंरूपान् नगरव्यूहान् गृहव्यूहान् भोजनव्यूहान् [समलंकृत्य] राजगृहान्महा-

सुगत सज्जं भक्तं यस्येदानीं भगवन् कालं मन्यसे सार्धश्च बोधिसत्त्वसङ्घेन भिक्षुसङ्घेन चान्यैश्च महेशाख्यमहेशाख्यैरुदारोदारदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगकुंभाण्डप्रेतपुटेन मनुष्यामनुष्यैरपि सार्धं राजगृहं महानगरं प्रवेष्टुं मम च गृहे भक्तं भोक्तुम्। तत्रेदमुच्यते

सु अलङ्कृतुमपि पुर वर सर्वं तथपि च मन्दिरु मण्डितु नाथा।
सज्जितु शतरसु भोजनु दिव्यं काल तथपि तु उत्थिहि सुगता॥
दशबलगुणधर ऋषिवरनमिता सुतगणपरिवृतु प्रविशहि नगरम्।
उत्थितु दिनकरु तमनिकरहरा समयु त भगवान् मम गृहि भोक्तुम्॥
सुतसहितो देव गच्छिहि गेहं भेष्यति अर्थ महान्तु जनस्य।
यथ तुह व्याकृतु दीपंकरेणो तथ मम व्याकरि लोकसमक्षम्॥
व्याकरणं मम श्रुत्विह लोको चित्तु जनेष्यति अत्र उदारम्।
बुद्ध भविष्यति सर्वजनोऽयं नास्तीह कश्चिदभाजनसत्त्वो॥
उत्थिहि उत्थिहि दशबलदेवा कुरु मम नुग्रहु गच्छिहि गेहम्।
यथ तुहु गच्छसि मन्दिर मह्यं तथ अहु यास्यमि बोधिद्रुमेन्द्रम्॥
तत्र च गत्वहु बोधिद्रुमेन्द्रं बध्वा आसन अचल अकम्पम्।
भंजिय मारु ससैन्य कुमैत्रा प्राप्स्यमि बोधि यथा त्वयि प्राप्ता॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्यारोचनां विदित्वा चन्द्रप्रभं कुमारभूतं गाथया प्रत्यभाषत

उत्थिहि चन्द्रप्रभा जिनपुत्रा उत्थिहि दानरता वरसत्त्वाः।
उत्थिहि कारुणिका दृढशीला यामि तस्य भोक्तु निवेशनमद्य॥

अथ खलु भगवानिमां गाथां भाषित्वा उत्थायासनात् काल्यमेव निवास्य पात्रचीवरमादाय महता भिक्षुसङ्घेन सार्धं परिपूर्णेन भिक्षुशतसहस्रेण सम्बहुलैश्च बोधिसत्त्वैर्महासत्त्वैः परिवृतः पुरस्कृतोऽनेकैश्च देवनागयक्षगन्धर्वासुरऋषिगरुडकिन्नरमहोरगकुम्भाण्डप्रेतपूतन-मनुष्यामनुष्यशतसहस्रैः पूज्यमानोऽभिष्टूयमानो महता बुद्धानुभावेन महता बुद्धप्राति-हार्येण महता बुद्धेर्यापथेन रश्मिकोटीनियुतशतसहस्रैर्निश्चरद्भिर्नानातूर्यकोटीनियुतशतसहस्रैः

नगरान्निष्क्रम्य येन गृध्रकूटपर्वतो येन भगवांस्तेनोपसमक्रामत्। उपसंक्रम्य भगवन्तं त्रिः प्रदक्षिणीकृत्य [एकान्तेऽस्थात्। एकान्ते स्थितः] चन्द्रप्रभः कुमारभूतो भगवतः कालमारोचयामास। कालो भगवन् कालः सुगत सिद्धं भक्तं यस्येदानीं का[लं मन्यसे। अथ]

प्रवाद्यमानैश्छत्रध्वजपताका-कोटीभिरनेकाभिरत्युच्छ्रिताभि-र्नानाचित्ररूपवर्णोदारैरनेकैर्हंसक्रौञ्चचक्र-वाकसारसचकोरमयूरचाषशुकशारिकाकोकिलकलविङ्ककुणालप्रभृतिभिः सर्वैः शकुनिगणवृन्दैरनेक प्रकारप्रियमधुरमनोज्ञभाषिभिरमरैरिवान्तरीक्षे वाद्यविशेषान् स्वरवरैः कुर्वद्भिर्दिव्यविचित्ररुचिर-रत्नमयैश्चोदारोदारैरनेकैर्धूपघटिकानियुतशतसहस्रैः सर्वैर्वैदूर्येन्द्रनीलस्फटिक-मुसारगल्व-दण्डै-रिन्द्रकेतुसुरूपविकटबकुलपाश्चिकशाक्यवर्धनप्रभृतिभिरनेकैर्यक्षेन्द्रकोटीनियुतशतसहस्रैरुभयहस्त-मुषलप्रगृहीतैरुरगसार-गोशीर्ष-मृणाल-तमाल-हरि-मलय-लोहितचन्दनागुरुपरिपूर्णैर्धूमायद्भिर्नाना-दिग्देशागतैश्च महेशाख्यैर्महेशाख्यैर्भूपालैरनारोहस्वलङ्कृतानेकहस्त्यश्वरथपदातिकसमूहपरिवृतै-र्महामाल्यदामरत्नमालापाणिपरिगृहीतैः पुरतः पद्भ्यां गच्छद्भिरनारोहैश्च तैः स्वलङ्कृतैर्हस्त्यश्वैः सलीलमदखेलगमनाभिप्रायैः सुमनोज्ञमनोहरं कूजद्भिर्ब्रह्मा च दक्षिणेन भगवतः पूजोपस्थान-परिचर्यां कुर्वन् गच्छति स्म। वामेन च शक्रो देवानामिन्द्रो गणनासमतिक्रान्ताश्च महेशाख्यमहेशाख्या उदारोदारदेवपुत्रा दिव्याम्बरमुकुटकटककेयूरकुण्डलाङ्गदवलयावतंसक-रत्नसूत्रपुष्पदामकलापालङ्कृतशरीरा अनन्तर्हितात्मभावा दिव्यमन्दारव-रोच-कोविदार-स्थालक-कुरुवक-चम्पक-कर्णिकाराशोक-पाटलातिमुक्तकोत्पल-तिलक-बकुल-मल्लिका-कुन्द-केशर-पद्म-कुमुद-पुण्डरीक-सौगन्धिक-रत्नदामक-रत्नागरु-रत्नफलव्यग्रहस्ता नानातूर्यशतसहस्राणि नादयन्तोऽम्बर-कोटीर्भ्रामयन्तो हाहाकारकिलिकिलाप्रकृतिकशब्दं प्रमुञ्चन्तो महापुष्पवर्षं प्रवर्षन्तः सर्वगगनतलं निरन्तरमापूर्य स्थिताः। भगवतः पूजाकर्मणे पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवररत्नवर्षैश्च प्रवर्षद्भिर्भगवांस्तपोदद्वारेण राजगृहं महानगरं भोक्तुं प्रविशति स्म। इयमत्र धर्मता। तत्रेदमुच्यते

काल विदित्व तथागत बुद्धः प्रक्रमते भगवान्नरसिंहः।
सर्वगुणैः समलङ्कृतु वीरो भासयमान अवन्तिय क्षेत्रान्॥
तत्र वलोकितु स्थामु अमोघो गन्धहस्ती पि च रत्नबाहुः।
रत्नकेतु दुरभिसम्भवु वीर एत चान्य जिनपादानुबद्धाः॥
दक्षिणतो अजित स्थितु तस्य मैत्रकु नाम अनन्तगुणाढ्यः।
योऽस्य अनन्तरु भेष्यति बुद्धः पुण्यज्ञानपरिपूरितभारः॥

[खलु भगवान् उत्थायासनात् कल्यमेव] निवास्य पात्रचीवरमादाय महता भिक्षुसङ्घेन सार्धं परिपूर्णेन भिक्षुशतसहस्रेण संबहुलैश्च बोधिसत्त्वै[र्महासत्त्वैः परिवृतः पुरस्कृतोऽने]कैश्च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्य-शतसहस्रैः

मैत्र्युपेक्षमुदभावितकायो करुणया च जनितः स महात्मा ।
धर्ममयापर्यन्तगुणेभिश्चिन्तयमानु मुनीन्द्रगुणानि ॥
कारुणिकं सुगतमनुबन्धि तस्य अनन्तरु यन्नरु केचित् ।
भद्रकल्पि महामतिमन्तो ये चतुरूनु बुद्धसहस्रा ॥
तेभि पुरस्कृतु मैत्रकु तत्र येन पूर्वि पुरि राजगृहेऽस्मिन् ।
कल्पि कल्पि जिन पूजित नन्ता चन्द्रकान्तप्रभ दिव्यशरीराः ॥
चन्द्रप्रभः पुरतः स्थितु वीर वामस्थितो वर कारुणिकस्य तत्र ।
मञ्जुशिरो बहुकोटीशतेभिः ऋद्धिगुणेभि निष्पन्नशरीरा ॥
क्षेत्रशतान्यनन्त व्रजन्तो तस्य अनन्तरु श्रावकसङ्घा ।
शारिसुतो तथ मौद्गल कालो काश्यप कप्फिण नन्दु सुभूती ॥
भद्रिकुराज तथपि कौण्डिन्यो आनन्द तथ राहुल स्थविरो ।
स्वागत कौष्ठिकु पूर्ण उदायी रेवत कोष्ठिलु पालि निरुद्धो ॥
तज्जटिला नव पूर्ण सहस्रं श्रावकसङ्घ अनन्तरि सर्वे ।
उग्रतपा व्रतवेदविधिज्ञा शाप-अनुग्रह-दानसमर्थाः ॥
प्राञ्जलि प्रह्वकृता रिषि दान्ता शान्तमना अथ दान्तमनोभिः ।
बुद्ध पुरस्कृतु लोकप्रदीपो प्रविशति कारुणिको नरसिंहः ॥
प्राणिसहस्रं प्रमोचयमानो कार्तिक पूर्णिमचन्द्र यथैव ।
तारागणाधिपतिः परिशुद्धो ब्रह्मसहस्रशतेभिर्बहुभिः ॥
अप्रतिमो परिवारितु शास्ता यच्चरणौ पुरद्वारि निक्षिप्तौ ।
कम्पित मेदिनी सहवनषण्डा देवमहोरगदानवसंघाः ॥
पुष्प क्षिपन्ति शुभाम्बरगन्धान् [ चन्दनपूर्ण उदार विचित्रान् ।
कृत्व प्रदक्षिणु कारुणिकस्य बोधयि ते प्रणिधिं करोन्ति ]* ॥

*The lines within brackets are wanting in Tibetan.

पूज्यमानोऽभिष्टूयमानो [महता बुद्धानुभावेन] महता बुद्धप्रातिहार्येण महता बुद्धेर्यापथेन रश्मिकोटिनियुतशतसहस्रैर्निश्चरद्भि[र्नाना-]तूर्यशतसह[स्रैः पुष्पगन्धमाल्यविलेप]नचूर्णचीवरैः प्रवर्षद्भिर्येन राजगृहं महानगरं तेनोपसंक्रामति स्म। चन्द्रप्रभस्य कुमार-

समनन्तरप्रक्षिप्तश्च भगवता दक्षिणश्चक्ररत्नालङ्कृतापरिमितकुशलमूलसंचित इन्द्र-कीले पादः। अथायं त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारं कम्पितः प्रकम्पितः सम्प्रकम्पितः। चलितः प्रचलितः सम्प्रचलितः। वेधितः प्रवेधितः सम्प्रवेधितः। क्षुभितः प्रक्षुभितः संप्रक्षुभितः। रणितः प्ररणितः सम्प्ररणितः। गर्जितः प्रगर्जितः सम्प्रगर्जितः। पूर्वा दिगवनमति पश्चिमा दिगुन्नमति। पश्चिमा दिगवनमति पूर्वा दिगुन्नमति। उत्तरा दिगवनमति दक्षिणा दिगुन्नमति। दक्षिणा दिगवनमति उत्तरा दिगुन्नमति। अन्तादवनमति मध्यादुन्नमति। मध्यादवनमति अन्तादुन्नमति। महतश्चावभासस्य लोके प्रादुर्भावोऽभूत्। अन्यानि चाप्रमेयान्यसंख्येयान्याश्चर्याद्भुतानि प्राति-हार्याणि संदृश्यन्ते स्म। इयमत्र धर्मता। तत्रेदमुच्यते

B ०माभिकीर्णं धूपेन...विततमनु...कठल्लं विचित्रपुष्पाभिकीर्णं चन्दनचूर्णाभिकीर्णंद्रवाक्क-तोरणनिर्यूहपंजरजाला...कार्षीत्।...ङ्कृत्य स्वच्छनिवेशनमनेकानेकविचित्रप्रकार...विहारप्रति-मण्डितं दिव्यतुषितकायिकवस्त्रं प्रतिमण्डितमशोभतोप...स्म।...प्रज्ञा...स्म।...प्रज्ञा...स्म। ...दिशमवलम्बयति स्म। तासु च...धूपायन्ते यदुत...सुर......स्तं गृहवरम...।...मुच्यते। प्रतिमण्डित गृहवरु...उदारु...। दिव्यु सिंहासनु...निवत्स्यति...।...स्र अनन्ता... निवत्स्यति...गुरुस्य...जिनस्य।...प्रपूरिय...घण्टाश्च। रत्नमयसत्त्वविचित्राः...उत्थितु... ज्ञ।......रत्न......वरैः। आकीर्णु......णितलं......दशबलमगणैः। तथ नागयक्ष असुरैर्बहुभिः आलोकितश्च बहुदेवशतैः। चन्द्रप्रभस्य मव भवनवरं [ ]।... नगरं समलङ्कृत्य स्वच्छनिवेशनमनेकालङ्कारविचित्रं कृत्वा तस्यामेव वेलायां महति प्रत्यूष... मानैः उच्छ्रितच्छत्रध्वज...टीभिरनेकाभिरत्युच्छ्रिताभिर्गीत्या च...नियुतसह...मान्दारपुष्प-भरिता···पुटाः...जातिबद्धा......रत्नकेतुरससम्भवमञ्जुश्रीकु......रत्नकुमारामोघदर्शि ...यः एतत्......गमेन महता बोधिसत्त्वगणेन परिवृतः......राहस्र......समूहसम्मिश्रया च इतरया अप......हया स्वयञ्च दिव्यमान्दारवपुष्प......नुभावेन महता बोधिसत्त्वविकुर्वितेन मनोज्ञमनोज्ञैः......शब्दं श्रृयद्भिः...नगरं...द्वारेण...कूटः...येन च भगवांस्तेनोपसंक्रम्य

भूतस्य निवेश[ने प्रक्षिप्तश्च भगवता दक्षिणश्च]करतलसमलंकृतः अपरिमितकुशलसंचितपादरत्न इन्द्रकीले। अथ तावदेव तस्मिन् महानगरे अने[कानि आश्चर्याद्भुतानि प्रातिहार्याणि

भगवतः...पुष्पाञ्जलिना च भग...कृत्य स्वाभिर्दिव्य...स्म। कालो भगवन्...सुगत स तं भक्त'...दानीं भगवान्...से। सार्धं बोधिसङ्घेन भि...न्यैश्च महेशाख्यैरुदारोदारैर्देव... पूटन......मुच्यते। समलङ्कृतु......पुरुपरु सर्वन्तथरं मन्दिरु म..:था। ...भोजन दिव्यं ...तथागत...। ...ऋद्धिवर......सुरगण...। उत्थिहि......रत्ननिकरहासे सम... ...गृहि...। सतसहितादर गच्छिय...। पृथु...त्तम्। ...सूत्र उदारं। ...सव्व जगोयं नास्तिह...भोजनु सत्त्वो। उत्थिहि दशबल...गच्छिय...। ...तुहु यास्यसि मन्दिरु... मेन्द्रम्। तत्र च गन्धहु...आसनु...अकम्प्यं। ...मानुष सेनकुमद्या प्राप्...प्राप्ताः। अथ...चन्द्र...रोचनां विदित्वा...गाथाभिः...भाषत। उत्थिहि...नमद्य। ...भाषित्वा उत्थायासनात्तल्पमेव नि......भिक्षुसङ्घेन सार्धं परि...सुरगरुड......मनुष्यामनुष्यशत... पूज्यमानोऽभिष्टूयमानो महता च बुद्धा...महत्या बुद्धऋद्ध्या महता...सहस्रैर्निःसरद्भि-र्नानातूर्यकोटीनियुत...नानाविचित्र...शारिकाकलविङ्क...भिः सर्वश...प्रकारैः प्रिय...भिरमर-मिवान्तरीक्षे वाद्यविशेषं स्वरवं कु...रनेकधूप···सर्ववैदू...मुसालगल्वदनैरिन्द्र...टवकुल... शाक्यप्रवर्द्धन...हस्तमूल...मृणालहरिमलतमालपलोहित...धूपायमानै......मदखेदरमणाभि-प्रायैः सुमनोज्ञ···हरैः व्रजद्भिः......गच्छति स्म। ...दारोदारा......मुकुटकेयूर... अनन्तहितात्मभावाः....वरोचककोविदारस्थालककुरवक....कर्णिकारापटलातिमुक्तकोत्पलतिलक-कुलमल्लिकाकुन्दकेशरा......रत्नफलतरुव्यग्र...सहस्रान्नादयन्तो स्वर...हाहाकिलाप्रक्ष्वेडित-शब्दान् प्रमुञ्चयन्तो महापुष्पवर्षं प्रावर्षयन्तः...कर्मणा...विलेपनवर्णचीरकिलवरच्छत्रध्वज-पताकारत्नवर्षैश्च प्रवर्षद्भिः भगवांस्त्रिपोतद्वारेण...मुच्यते। कालु...सिंहः। सर्वगुणो... कृत...मानु अचिन्तिय क्षेत्रं। ...स्थासु......गन्धहस्तीपि...। रत्ना...सम्भववीरों एद्विवान्यि...नुबद्धा। ...मस्या मैत्रकुरामा...गुणाढ्याः। ...पूरितभावः। ...भावितकाये करुणा या च...मया...श्चिन्तयमान...। ...अनुबन्धी तस्यन्तरु पान्तक केचित्। भद्रक ...महामुनि...हस्रा। तेऽपि...परि राज गृहस्मिं। कल्प...। ...ऋद्धिगुणाभि समुद्गतु श्रुत्वा क्षेत्रशतानि अनन्त व्रजन्तो। ...श्रुतो...कफिन...। भद्रि कुमारु तथापि कौण्डिलो। आनन्द तथ राहुल स्थविरो सो गतु काश्चिकु पूर्ण उदायी। रेवतु कोष्ठिल···तर्जटिलोचन पूर्ण...। ...सङ्घि...सर्वं उग्रतया...।...ऋषिदाराः। शान्तमनाथ तदान्तमनेभिः...कार्तिक

संदृश्यन्ते स्म] ।* इयमत्र धर्मता । तत्रेदमुच्यते

पुरवर प्रविशन्ति[1] नायकस्मिन्[2]
चरणवरु स्थपितश्च[3] इन्द्रकीले ।
चलति[4] [वसुमती शिरीय तस्य
प्रमुदित[5] भोन्ति पुरोत्त]मस्मि सत्त्वाः ॥१॥

ये नर क्षुधिताः पिपासिता वा
न भवति तेष[6] जिघत्स[7] तस्मि काले ।
अपगत भवती क्षुधा [पिपासा[8]
यद् जिनु निक्षिपतीन्द्रकीलि पादम्[9]] ॥२॥

पूर्णमि...पती...।...भिः अप्रतिमो ।...यश्चरणोपरि वारि निक्षिप्तो...सर्वनिषण्णा । देव... । ...क्षिपित्व...गन्धं......चूर्ण उदारु विचित्रां । ......प्रकरोन्ति । सम...निक्षिप्तश्च... दक्षिणाचक्रा...तमपरि...मूलसञ्चित इन्द्रनीलपादः । यथायं...स्वलोक...। चरितः प्रचरितः संप्रचरितः । बोधितः प्रबोधितः संप्रबोधितः ।...श्चावभासश्च...चाप्रमेयान्यसंख्येयानि चाश्चर्या.. मुच्यते

C ०विततं सर्वचत्वरश्टं......तृणशर्करकठल्लं चन्दनचूर्णानि रत्नचूर्णविचित्रितानि पुष्पाभिकीर्णानि पुष्पविचित्रितानि गवाक्षनिर्यूहपं...लङ्कारव्यूहैर्नगरव्यूहा व्यूहापिता अभुवन् । सर्वावन्तं च नगरमुत्पलकुमुदपद्मपुण्डरीकाभ्यवकीर्णमकार्षीत् स्वं...सर्वालङ्कारव्यूहित-मकार्षीत् । अथ खलु चन्द्रप्रभः कुमारभूत इमानेवंरूपान् नगरव्यूहान् गृहव्यूहान् भोजनव्यूहान्...येनाशीतिबोधिसत्त्वनियुतैः सार्धं केचित् तत्रैकजातिप्रतिबद्धा बोधिसत्त्वा महासत्त्वा अवलोकितेश्वरमहास्थामप्राप्त......मंजुश्रीकुमारभूतवीरसेनसुबाहुरत्नकुसुमामोघदर्शि-मैत्रेयप्रभृतयः एतत्पूर्वंगमेन महता...राजगृहा०

* Tib. 57 b, l. 4 remarks here thus: འཕགས་པ་དེ་ང་ང་ འཛིན་གྱི་རྒྱལ་པོའི་མདོ་॥ བམ་པོ་བཞི་བ ।

1 A & C प्रविशन्तु ; B पुरवरु प्रवि०
2 A नायकेन च० ; B नायकेनो च०
3 C ०वर स्थपि०
4 B चलित
5 A प्रमुदिता ; B सिरीय तस्य प्रमुदित
6 C तेस
7 A जिघत्सि
8 A पिपासिता
9 A ०न्द्रकील

तथ पुन नर ये भवन्ति अन्धाः
श्रोत्रविहीन अनाथ अल्पपुण्याः ।
सर्वि प्रतिलभन्ति[1] चक्षुः श्रोत्रं
यद जिनु[2] निक्षिप[तीन्द्रकीलि पादम्[3] ॥३॥
यमविषये[4] ये केचि भोन्ति] प्रेताः
सुदुःखित खेटसिंघाणकभोजनाशाः[5] ।
सर्वि[6] सुखित भोन्ति आभस्पृष्टा
यद जिनु निक्षिपतीन्द्रकीलि[7] पादम्[8] ४॥
[शैलशिखरशृङ्गपर्वताश्च
तथ वरपादप]शालकर्णिकाराः[9] ।
सर्वि अभिनमन्ति येन बुद्धो
यद जिनु निक्षिपतीन्द्रकीलि[10] पादम् ॥५॥
सनगरनिगमा ससागरान्ता
[प्रचलि वसुन्धरि षड्विकार सर्वा[11] ।
न भवति[12]] विहेठ कस्यपि चेह[13]
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥६॥

1 A ०लभति 2 C जातु निक्षिप 3 B ०कील पा० 4 B यमविषय

5 C ०खेदा शीघाला भोजनाशाः ; Tib. 58a. l. 1: ཤིན་དུ་ སྡུག་བསྔལ་ངར་སྣབས་མཆིལ་མ་ཟ །

6 B सर्वे 7 A जिनु मुनिपतीन्द्र० 8 B ०कील पा० ; C ०केलि पा०

9 B ०पादसालकर्णिकायाः 10 B ०कील 11 B ०कारि सर्वाः

12 B न च भवति 13 A विभेल्लोकस्य हाय ; C विहेठस्य चीह

[1]मरुमनुजकुम्भाण्डराक्षसाश्च
नभःस्थित तुष्ट[2] उ[दग्रचित्ताः ।
छत्र धरिय च लोकनायकस्य
परम]प्रणीत[3] जनेत्व[4] बोधिच्छन्दम् ॥ ७॥
[5]श्रूयति च मनोज्ञ वाद्यशब्द-
स्तूर्यसहस्र अघट्टिता रणन्ति ।
प्रमुदितास्तद भोन्ति [सर्वसत्त्वा
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥८॥
वृ]क्षशतसहस्र ओनमन्ति[6]
सर्वि प्रपुष्पित भोन्ति तस्मि काले ।
देवशतसहस्र अन्तरीक्षे
पूज करोन्ति अमानुषी जिन[7][स्य ॥९॥
ऋषभगण तदा नदन्ति[8] हृष्टा
हयद्विरदा]धिपती प्रवृद्धकायाः ।
मृगपतयो नदन्ति सिंहनादं
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥१०॥
महीप[तय ये[9] केचि भूमिपाला
दिशि विदिशासु च आ]गता[10] भवन्ति ।

1 C सुर॰ 2 A पुष्ट 3 A प्रणीत्य ; B परीत ; C प्रीणित
4 A & C जनित 5 A drops vs 8-9
6 C ओनदन्ति 7 C जन 8 A ॰गणा नदन्ति ; B ॰गणातता न॰
9 B drops ये 10 A ॰पाला दशदिशि विदिशासु आगता

धरणितलि पतन्ति हृष्टचित्ता
दृष्टु जिनस्य शिरीमिममेवरूपाम्[1] ॥११॥
अन्ये[2] अभिष्टुवन्ति लो[कनाथम्[3]
अपरि क्षिपन्ति जिनस्य पुष्पवृष्टिम् ।
अ]परि दशनखाञ्जलिं करित्वा
'अहो जिनु कारुणिको' भणन्ति[4] वाचम् ॥१२॥
केचि वर क्षिपन्ति मुक्तहारान्[5]
बहुविध[6] आभरणान् ज[नेत्व[7] प्रीतिम् ।
चीवर रतनान्[8] क्षिपन्ति अन्ये
अतुलियु अ]ग्रु जनित्व बोधिचित्तम्[9] ॥१३॥
केचि वर क्षिपन्ति हेमजालम्[10]
अपरि पुनर्मुखफुल्लकं[11] क्षिपन्ति ।
केचि वर क्षि[पन्ति हेमनिष्कां-
स्तथ अपरे परिहारकान् क्षिपन्ति ॥१४॥
कटकवर क्षिपन्ति केचि तत्र
अपरि केयूर क्षिपन्ति रत्नचित्रान् ।
अम्बरकुसुमान् क्षिपन्ति अन्ये
चित्त जनेत्व 'सियां वयं पि बुद्धाः'[12] ॥१५॥

1 B ०मेवरूपं ; C शिरीमिवेवरूपा 2 B अन्य
3 A ०नाथा 4 B ०कोति हरन्ति ; C भहन्ति
5 A & C मुक्तिहारान् 6 C बहुध 7 A जनेत्य ; B ०रणा जनेत्व 8 B विवर०
9 B ०लिय अग्र जनेत्व बो० ; C ०सत्त्वम् 10 C ०माला
11 B ०कं क्षि० ; C ०का क्षि ; Tib. 58 b. 1. 4: མེ་ཏོག་ རྒྱལ་བཟང །
12 B वयं विबुद्धाः

अपरि नरः क्षिपन्ति हेमचित्रां[1]-
स्तथ मणिसूत्रवरान्[2] प्रसन्नचित्ताः ।
केचि च रतनजालकं[3] क्षिपन्ति
द्वारि यदा स्थितु भोति लोकनाथः ॥१६॥

परम दुःखित ये भवन्ति सत्त्वा
बहुविधुपद्रुवु शोकशल्यप्राप्ताः ।
सर्वि सुखसमर्पिता भवन्ति[4]
पुरुषवरस्य शिरीय[5] नायकस्य ॥१७॥

परभृतशुकशारिकामयूरा-
स्तथपि च सारसचाषहंसक्रौञ्चाः ।
सर्वि द्विजगणा नभे स्थिहित्वा
परम मनोज्ञ रुतानि व्याहरन्ति ॥१८॥

प्रमुदित तद भोन्ति पक्षिसंघा
मधुर मनोज्ञ[6] रुतं प्रमुञ्चमानाः ।
रागु तथ समेन्ति दोषमोहं[7]
ये च शृणन्ति[8] मनोज्ञ पक्षिशब्दान् ॥१९॥

श्रुणिय रञ्जनीय[9] सत्त्वकोट्यः
सर्वि च लभन्ति क्षान्तिमानुलोमाम् ।

1 B ०सूत्रां०  2 B मणिचूड़ध
3 A रतनाञ्जलितां ; B ०जालिकां  4 B सर्वसुख सति भवती
5 A गीरीय  6 B मधुमनो०  7 A राशु तथ गमेन्ति दोषमहान्
8 B शृणोति
9 A शुणिय रजनीय ; Tib. 59a. 1. 3: དགའ་བའི་སྒྲ ।=रञ्जनीय रुतम् ।

तांश्च सुगत व्याकरोति सर्वान्[1]
'भविष्यथ यूय जिना अनागताश्च'[2] ॥२०॥
न भवति[3] किलेशु तस्मि काले
सर्वि सगौरव भोन्ति धर्मराजे ।
अपगतभयदोषमोहजालाः[4]
प्रणिपतिताः सुगतमभिष्टुवन्तः[5] ॥२१॥
पश्यिय[6] तद् रूप नायकस्य
स्पृह जनयन्ति वरस्मि बुद्धज्ञाने ।
कद वय लभे ज्ञानमेवरूपम्[7]
आशयु ज्ञात्व जिनोऽस्य[8] व्याकरोति ॥२२॥
रश्मिशतसहस्र[9] निश्चरन्ति
एकैकतः[10] सुगतस्य रोमकूपात् ।
तदुत्तरि यथ गङ्गवालिका वा[11]
न पि[12] च निमित्तु गृहीतु शक्यु[13] तासाम् ॥२३॥
सूर्यप्रभ न भान्ति[14] तस्मि काले
न पि मणि नाग्नि न[15] सर्वदेवतानाम् ।

1 B याश्च सुगतु व्याकरो सर्वा
2 B ०गतेश्च
3 B न च भति
4 B सर्विष गौरव भोन्ति धर्मराजा अपगतमल०
5 The last two lines of stanza no. 21 are wanting in Tibetan.
6 B प्रतिपत्तिषु सुगतस्य तिष्ठवन्तः पश्यिय
7 A कद वलभि ज्ञान०
8 A जिनस्य
9 B तस्मि शत०
10 B एकीकता
11 B drops वा
12 B त इतरिय गङ्गवालिका वा न पि
13 B गृहीत्व शक्तु
14 B ०भ तलन्ति
15 A omits न

सर्वि प्रभ न भान्ति[1] तस्मि काले
यद् प्रविशन्त पुरं विभाति बुद्धः ॥२४॥
पद्मशतसहस्र प्रादुर्भूता
धरणितु कोटिसहस्रपत्र शुद्धाः ।
यत्र दशबलः स्थपेति पादं
मार्गं गतः[2] सुगतो महागणेन[3] ॥२५॥
अशुचि कलिमला न भोन्ति[4] तस्मि काले
नगरवरं[5] प्रविशन्ति नायकस्मिन् ।
नगरु सुरभि सर्वि[6] धूपनेन
गन्ध मनोज्ञ प्रवायते समन्तात् ॥२६॥
वीथि नगरि तद् भोति[7] सर्वा
अपगतलोष्ट्रकठल्ल सिक्त[8] गन्धैः ।
पुण्य दशबलस्य एवरूपा
विविध विकीर्ण भवन्ति मुक्तपुष्पाः ॥२७॥
यक्ष शतसहस्र रौद्रचित्ताः[9]
कनकनिभं द्विपदेन्द्र दृष्ट्व बुद्धम्[10] ।
जनयि विपुलु नायकस्मि प्रेमं
शरणमुपेति च[11] बुद्धधर्मसंघान् ॥२८॥

1 A भोन्ति 2 B पाद मार्गगतः 3 B सुगतो गणेन
4 B अशुचिकरमलान भान्ति ; Tib. 59b, l. 1 : དེ་ན་ཉལ་ཉིལ་མི་གཙང་མེད་པར་གྱུར ། 5 B नगरवनं 6 A सर्वे
7 A नगरस्तद् भोन्ति ; B शुद्ध भोन्ति 8 B लोष्टकठल्ल०
9 B रौद्रचिन्ता 10 A दृष्टबुद्धं 11 B ०पन्ति च

ये च देवशतसहस्र[1] कोटियो वा

उपगत सर्वि नरेन्द्रदर्शनाय ।

वर्षति सुगतस्य पुष्पवर्षं

गगनतले च स्थिहन्ति मुक्तपुष्पाः[2] ॥२९॥

ये मनुज क्षिपी जिनस्य पुष्पं

गगनतले भवतीति[3] पुष्पच्छत्रम् ।

ये पुनः[4] कुसुमान् क्षिपन्ति देवा[5]

धरणितले स्तृत भोन्ति[6] दिव्यपुष्पाः ॥३०॥

न भवति कदाचि दृष्ट्व तृप्ती[7]

देवमनुष्यकुम्भाण्डराक्षसानाम् ।

यद् दशबलु दृष्ट्व लोकनाथं

प्रमुदित भोन्ति उदग्रकल्पचित्ताः ॥३१॥

1 A omits ये च

2 A मुक्तपुष्पवर्षान् and adds ये मनुजस्मि ये जिनस्य पुष्पं गगनतले च स्थिहन्ति मुक्तपुष्पाः ; Tib. 59b, l. 5: མེ་ཏོག་གཏོར་ནས།

3 B भवती ; Tib. 59b, l. 5:

རྒྱལ་ལ་མི་ཡིས་ མེ་ཏོག་ གང་གཏོར་བ།

ནམ་མཁའི་ ངོས་ལ་མེ་ཏོག་ གདུགས་སུ་གྱུར། །

4 B यत पुन

5 A देव

6 A & B स्थित भोन्ति ; Tib. 59b, l. 6: བཀྲམ་པར

7 B न च भवति कदाचिदष्ट तृप्ती

न मनसि तद् भोन्ति दिव्यपुष्पा
न च पुन विस्मयु जायते च तत्र[1] ।
यद् पुरुषवरस्य कायु दृष्ट्वा
तुष्ट भवन्ति उदग्र सर्वसत्त्वाः ॥३२॥

ब्रह्म [2]दशबलस्य दक्षिणेनो
तथ पुन वाम तु शक्र देवराजा ।
गगनतलगता[3] अनल्प देवकोट्यः
पुरुषवरस्य जनेन्ति चित्रिकारम्[4] ॥३३॥

परिवृत जिनु देवदानवेहि[5]
मरुमनुजान शिरिं ग्रसित्व[6] सर्वाम् ।
धरणि क्रमतलेहि चित्रयन्तो
प्रविशि पुरं भगवान्निमन्त्रणाय ॥३४॥

कुसुमित अनुव्यञ्जनेहि काये[7]
यथ गगनं परिपूर्ण तारकेहि ।

1 Tib. 60a, l. 1: ལྷ་ཡི་མེ་ཏོག་ལ་ ཡང་ ཡིད་ མི་སེམས། །
དེ་དག་ལ་ ནི་ ངོ་མཚར་ འཛིན་པ་མེད ། །

2 B दशबल दृष्ट लोकनाथां

3 A ०तले गता

4 Tib. 60a, l. 2: ཤིན་དུ་གུས་པ

5 A ०दानवेभी

6 B परिवृतु जिन देवदानवेहिं मनुमनुजान गिरिब्रह्म ; Tib. 60a. l. 2: དཔལ་གཟི་ཀུན་ཐྲོགས་ནས །

7 B प्रविसिय तान् भगवान्निमन्त्रयाम ॥ कुसुमितु अनुव्यञ्जनेहि काया

प्रतपन्ति[1] स्थितु राजमार्गि बुद्ध-
श्चन्द्रो नभःस्थ यथैव पूर्णिमास्याम्[2] ॥३५॥
मणिरतनु यथा विशुद्धु श्रेष्ठं[3]
व्यपगतदोषमलं प्रभासमानम् ।
दिशि विदिशि प्रमुंचि आभ शुद्धां
तथ[4] जिनु भासति सर्व लोकधातुम् ॥३६॥
परिवृतु जिनु[5] देवदानवेहि[6]
प्रविशति राजगृहं नराण श्रेष्ठः ।
धरणि क्रमतलेहि चिलयन्तो[7]
प्रविशति चन्द्रप्रभस्य गेहि[8] बुद्धः ॥३७॥
पुरवरु समलङ्कृतं समन्ताद्
बहुध्वज कोटिसहस्र उच्छ्रिताल[9] ।
गन्धवरविलिप्त सर्वभूमी
सुमनः प्रकीर्ण तथैव वार्षिकारम्[10] ॥३८॥
यद सुगतु कथां कथेति नाथो
वीथिगतो मनुजान् कृपायमानः ।

1 Tib. 60a. l. 4: སངས་རྒྱས་ལམ་ ན་བཞུགས །

2 B प्रतपरिस्थितु राजसागि बुद्धः चक्रु नभस्थ यथेव पूर्णिमास्याम्

3 B ०रतनु यथा विशुद्ध येषु

4 B ०दिशि प्रमुञ्चि आभ शुद्धा तथ

5 B अपरिवृतु जिनु

6 A ०दानवेभी

7 A ०लेभि लयन्तो ; B ०तलेहि चित्तयन्तो

8 B नाभ

9 A ०ध्वज बोधिसत्त्व उच्छ्रिताल

10 A समनुकीर्णं ; B तथैववार्शिका च

निर्मितु जिनु तत्र निर्मिणित्वा
वितरति तेषु प्रणीत बुद्धधर्मान् ॥३९॥
दशनियुत जिनान निर्मितान[1]
कनकनिभा अभिरूपदर्शनीया ।
परिवृतु जिनु बुद्धु[2] निर्मितेहि
वितरति शून्यत शान्तबुद्धबोधिम्[3] ॥४०॥
प्राणिशतसहस्र तं श्रुणित्वा
प्रणिदधि चित्तु वराग्र[4] बुद्धज्ञाने ।
कद वय लभि ज्ञानमेवरूपं
आशयु ज्ञात्व जिनोऽस्य व्याकरोति ॥४१॥
केचि स्पृह जनेन्ति तत्र काले
परम अचिन्तिय लब्ध तेहि लाभाः[5] ।
येहि जिनु निमन्त्रितो नरेन्द्रो
न च पर्यन्त स तेषु[6] दक्षिणायाः ॥४२॥
केचि पुनरुपपादयि[7] सुचित्तं
श्वो वय[8] कारुणिकं निमन्त्रयामः ।
[9]हितकरमनुकम्पकं प्रजानां
यस्य सुदुर्लभु दर्शनं भवेषु[10] ॥४३॥

1 A जिनस्य निर्मितानां ; B जिनस्य निर्मितानी
2 B परिवृतु जिन तत्र
3 Stanza 40 is omitted in Tibetan.
4 B जिनुवराग्र
5 A काले परम अचिन्तिय तेहि लब्धलाभान्
6 A पर्यन्त स देश
7 A केचि पुषादयं
8 B वयं
9 B हितकरु०
10 B ०र्लभं दर्शनं भवेयुः

केचि स्थित निर्यूहखोटके हि[1]
सुभगु विभूषितगात्र प्रेमणीयाः[2] ।
दिव्य दशबलस्य मुक्तपुष्पा-
ण्यवकिरतेऽग्रु जनित्व[3] बोधिचित्तम् ॥४४॥
सुरुचिर वर चम्पकस्य मालां
तथ अतिमुक्तक गन्धवर्षिकां च[4] ।
अपरि पुनः क्षिपन्ति पट्टदामान्
परम निरुत्तरु चित्तु संजनित्वा ॥४५॥
केचि स्थित गृहे गृहीतपुष्पाः[5]
परम विभूषितकायु चीवरेहि ।
पुष्प विविधु गृहीत्व[6] पट्टदामान्
प्रवर्षि येन[7] जिनो महानुभावः ॥४६॥
पदुम कुमुदोत्पलान् क्षिपन्ति केचि
अपरि क्षिपन्ति विशिष्ट हेमपुष्पान् ।
मणिरतन क्षिपन्ति केचि तस्मिन्
अपरि क्षिपन्ति च चूर्ण चन्दनस्य ॥४७॥
अपरिमित भवन्ति अच्छरीया
अतुलिय ये न च शक्यु कीर्तनाय ।

1 B स्थितु नियुहखोटकेहि
2 A गात्रप्रेमणीयाम्
3 B मुक्तपुष्पा शाव किरतेऽग्रु जनित्व
4 A गन्धवार्षिकाणाम्
5 B गृहीत्व पुष्पान्
6 A विविध गृह्य
7 B प्रविशितु येन

पुरवरु प्रविशन्ति नायकस्मिन्

बहुजनकोट्य स्थिहिंसु[1] बुद्धज्ञाने ॥४८॥

अवृह अतपाश्च दृष्टसत्याः

सुदृश[2] सुदर्शन ये च अन्य देवाः] ।

तथ[3] पुनरकनिष्ठ वीतरागा

उपगत सर्वि नरेन्द्रदर्शनाय[4] ॥४९॥

तथ शुभमरुताश्च अप्रमेया

अपरिमित[5][शुभा उदग्रचित्ताः ।

शुभकृत्स्न नियुताश्च] अप्रमेया

उपगत पश्यितु नायकं महर्षिम्[6] ॥५०॥

अपरिमितु तथाप्रमाण-आभा

तथ पुन देव परीत्त-आभ [ये च[7] ।

बहु नियुत आभस्वराण तस्मिन्]

उपगत पश्यितु[8] तेऽपि लोकनाथम् ॥५१॥

बहव[9] शतसहस्र पारिषद्या[10]-

स्तथ पुन ब्रह्मपुरोहिताः प्रसन्नाः ।

1 B कोटि स्थिहिसु

2 B सदृश

3 Up to this missing in the Gilgit ms. C अथ

4 C adds here these lines :
बृहत्फलसदृशाश्च दृष्टसत्त्वाः शत...यथा प्रभासमानो ।
उपगत तत्र नरेन्द्रदर्शनाय ॥

5 A ०मेया अपरिपरीत्त ; C अपरिपरित्त०

6 A ०गतु पश्यितु ; B ०गतु यस्मिन् नायकम्महर्षी

7 A परित्त आभ ये व

8 C पश्यतु

9 A बहु च

10 B ०पार्षदाद्या०

ब[हुशत पुन ब्रह्मकायिकानाम्]
उपगत[1] नायकदर्शनाय सर्वे ॥५२॥
तथ पुन [2]परनिर्मितापि देवा-
स्तथ निर्माणरतिश्च शुद्धसत्त्वाः ।
प्रमुदित तुषिताथ [यामदेवा
उपगत सर्वि नम]स्यमान बुद्धम् ॥५३॥
त्रिदश अपि च शक्र देवराजा
अप्सरकोटिशतैः सहागतोऽत्र ।
कुसुमवर्ष सम्प्रवर्षमाणो
उपगत [बुद्ध-मुनीन्द्रदर्शनाय ॥५४॥
चतुरि] चतुर्दिशासु लोकपाला
वैश्रवणो धृतराष्ट्र नागराजा ।
विरूढकु विरूपाक्षु हृष्टचित्ता
उपगत[3] सर्वि नरेन्द्र ते स्तुवन्ता ॥५५॥
[ऐलविल[4] बलवन्त यक्षराजा
परिवृत] यक्षशतेहि प्रेमजातः[5] ।
गगनतलि स्थिहित्व हृष्टचित्तः[6]
क्षिपति अनेक विचित्र पुष्पवर्षम्[7] ॥५६॥

1 C तथागत
2 A, B & C परि०
3 B विरुधक विरूपाक्ष हृष्टचित्ता उपगत
4 A & B दितिबलवस्तु ; Tib. 61b, 1. 2 : ཡིར་བིར
5 C लक्षशतेहि प्रेमजाताः
6 C हृष्टचित्ताः
7 C पुष्पवर्षाः

अपरि पुनरनन्त[1] मालधा[री
विविध विचित्र गृहीत्व माल्यगन्धान्[2]] ।
सर्वि सपरिवार हृष्टचित्ताः
पुरुषवरस्य करोन्ति तत्र पूजाम् ॥५७॥
बह्व[3] शत करोटपाणि[4] यक्षा
अपि च सुभूषि तेष[5] य[क्षकन्याः ।
सुमधुर[6] सुमनोज्ञ यक्षवा]द्यै-
स्तूर्यशतेहि करोन्ति बुद्धपूजाम्[7] ॥५८॥
ललित[8]-मधुर-गीत-वादितस्मिन्
सुकुशलैः सह किन्नरीसहस्रैः ।
द्रुम उपगत[9] गन्ध[मादनातो
जिनवरु पूजितु[10] किन्नराण] राजा[11] ॥५९॥
शंबरबल[12] वेमचित्र राहु[13]
दानवकन्य सहस्रपारिवाराः[14] ।
असुरगण महर्द्धिकाश्च[15] अन्ये
उपगत ते रतना[नि वर्षमाणाः ॥६०॥

1 A & C अपि पुन सद मत्त
2 A गन्धमाल्यान्
3 C बहु
4 C करोडपाद
5 B अभूषिय तेषु ; C अभूषि ये तेस य
6 B सुवाद्युन
7 B सूर्यशकेहि करोन्ति तत्र पूजा
8 B लभित ; C लडित
9 A & B उपगतु
10 A पूजति ; B जिनवर पूजन
11 C पूजां
12 A ०लिर्वेम ; B सम्बरु च लिवेम ; C बडि
13 B चिलि रा० ; C चित्रहारु
14 B दानव कल्पसहस्र०
15 B महर्षिकाश्च

शतनियुत अनन्त राक्ष]सानां
राक्षसकोटिशतैरुपास्यमानाः[1] ।
पृथु विविध विचित्र मुक्तपुष्पान्
पुरुषवरस्य क्षिपन्ति गौरवेण[2] ॥६१॥
तथपि[3] च अ[नवतप्तु नागराजा
परम सुशिक्षिताश्च] नागकन्याः[4] ।
तूर्यशतसहस्र नादयन्त्यो[5]
उपगत पूजन[6] तत्र लोकनाथम् ॥६२॥
पञ्चशत अनवतप्तु[7] पुत्रा
वि[पुलु अनुत्तरु ज्ञान प्रार्थयन्तः ।
स्वजनपरि]वृता उदग्रु भूत्वा[8]
उपगत पूजयितुं स्वयं स्वयंभूम्[9] ॥६३॥

1 A & B ०पास्यमानः ; C ०कोटिरुपैरुपास्यमानाः

2 A adds उपगतु गिरिवल्गु कौञ्चनागराजौ सह परिवारु तथागतस्य मूलम् ।
वर विविधु गृहीत्व रत्नपुष्प' प्रणिपतितौ सुगतस्य पादयुग्मे ॥
पद्मु तथ महापद्मु नागराजा तथ पुन वासुकिनन्तु भोगकश्च ।
उपगतु वृषभिस्य ते सकाशं प्रणिपतिताः सुगतस्य गौरवेण ॥
उपगतु मणि नागराजा प्रीतमना वृषभिस्य पादमूलम् ।
वर सुरभि गृहीत्व नागपुष्पाः पुरतः स्थितु सुगतस्य नातिदूरे ॥
B adds उपगतु...वस्तुकौ च...राजो महिप परिवारु... । ...विविध...पुष्पान्...पतितौ... । पद्म तथा महापद्म...उपगतु...भिष्यते... । उपगतु मणिनागु नाग... । पुष्पान् पुरतु स्थितः...Tib. follows A & B.

3 C अथ अपि च अ

4 B च अनवतप्तनागराजा परमसुशिक्षित तस्य नागकन्या

5 C वादयन्त्यो ; B नादयन्तो

6 A उपगतु पूजनु

7 B अनवतप्तपुत्रा ; C अनोपतप्त

8 C उदग्रभूता

9 B स्वयम्भूः

तथपि च अपलालु[1] नागराजा

पुरुषवर[स्य कृताञ्जलिः प्रणम्य ।

वर रुचिर गृहीत्व] नागपुष्पान्[2]

स्थित[3] गगने मुनिराज[4] सत्करोन्तः[5] ॥६४॥

तथपि च मुचिलिन्द[6] नागराजा

प्रीतमनाः परितुष्ट हर्ष[जातः ।

विविध रत्नमौक्तिकं गृहीत्वा

उपगमि] नायकु अभिकिरन्तु तत्र[7] ॥६५॥

[तथपि च कालिकोऽपि नागराजा

उपगतु मुखु तथागतस्य हृष्टचित्तः ।

वर रुचिर गृहीत्व रत्नदामान्

पुरुषवरस्य पूज करित्व श्रेष्ठाम्[8]] ॥६६॥

सोऽपि परम गौरवं[9] जनित्वा

अनुस्मरमाणु गुणांस्तथागतस्य ।

1 B तथापि च अपलाल 2 B नागमुक्ता ; C नागपुष्प

3 A स्थितु 4 A मणिराज 5 B सत्करोत्तः 6 C अचलेन्द

7 C नायक मो किरन्ति तत्र

8 B ... ... ... ...०हृष्टचित्तः ।

वररुचिर गृहीत्व नागराजा विविधरतन मौक्तिकं गृहीत्वा ॥

उपगामि नायको किरन्तु तत्र तथापि च कालियकोऽपि नागराजा ।

उपगतु मूल तथागतस्य हृष्टचित्तः... ... ॥

वररुचिर गृहीत्व रत्नदामां पुरुषवरस्य करित्व पूज श्रेष्ठाम् ॥

9 C मौक्तिकं

स्वजनपरि[वृतः सनाग[1]सङ्घो
बहुविधु भाषति] वर्ण नायकस्य ॥६७॥
नन्दु तथ उपनन्दु[2] नागराजा
तथ पुनस्तक्षकु कृष्णगौतमौ च[3] ।
उपगत जिनु ते[4] नमस्यमानाः
[प्रणिपतिताः सुगतस्य पादयोर्हि] ॥६८॥
उपगत एलपत्रु नागराजा
परिवृत नागशतेहि रोचमानः[5] ।
मुनिवर जिनु काश्यपं स्मरन्तो
[स्वक उपपत्ति अपश्यि[6] अक्षणेषु] ॥६९॥
अहो अहु[7] पुरि आसि कांक्षप्राप्तो
मयि पुरि च्छिन्नु परित्तम् एलपत्रम्[8] ।
सो अहु उपपन्नु अक्षणस्मिन्
न सुकरु[9] [धर्म विजानितुं[10] जिनस्य] ॥७०॥
क्षिप्र] अहु जहित्व नागयोनिं[11]
परम जुगुप्सितमेतु जन्तुकायम् ।

1 B ०वृतस्स नाग० 2 B उपनन्दूपानन्दु ; C तथुपनन्दु 3 C गोतमश्च
4 B ०गतु जिनु ते ; C जनु ने 5 A & C रोदमानः
6 B ०वर जिन काश्यपः समन्तो स्वक उपपत्ति अपस्मि 7 A मुञ्ञ
8 B परिमाणि कांक्षप्राप्ता मयि परिच्छिन्न परिन्तु मे० ; C आसि कांक्ष प्राप्तो यमु पुरि च्छिन्नु मरित्तमे०
9 B उपगतु अक्षणेस्मिन्न सुकरु ; C सुकरु०स्मि न
10 B धर्मि विजानतुं 11 A क्षिप्त अञ्ञ जहि ; C बहु जनित्व नाग०

धर्मम् अहु विजानि शान्तिभावं[1]

पुरुषवरेण य ज्ञातु[2] बोधिमण्डे[3] ॥७१॥

[सागर अहिराजचक्रव]र्ती

परिवृतु नागत्रिकोटिसहस्रैः[4] ।

वरुण मनस्वी गृहीत्व मुक्तहारान्

उपगतु[5] ते भगवन्तु[6] पूजनाय[7] ॥७२॥

क्षिप्त शिलु[8] जिन[स्य तत्र येनो[9]

गगनस्थितेन गृही]त्व[10] तस्मि काले ।

राजगृहि[11] स किम्पिलोऽपि[12] यक्षः

पुरतः स्थितः सुगतस्य[13] गौरवेण ॥७३॥

1 B धर्म अहु निज निशीतिभावं ; C धर्मु मुहु विजानि शीतिभावं Tib, 62b. 1. 7: རྟོགས་པ་ བཞིའ་བ=शान्तबोधिम्

2 B पुरुषवेशं यो ज्ञा० 3 C बोधिसूत्र

4 A ०सङ्घः ; B सागरु आहु...त्रियोनि कोटिसङ्घैः ; C नागत्र त्रिप्राणिकोटिसङ्घैः

5 C वरुण तथ मनस्वि मुक्तहारैरुप०

6 B गृहीत्व रत्नहारमुपगत तेषु भवन्तु दर्शनाय ; C भवन्तु

7 A adds अन्यि बहु सहस्रनागराजा अपिच मनस्विय सागरो भुजगेन्द्रः ।

वर रुचिर गृहीत्व नागपुष्पं उपगतु ते सुगतस्य पूजनाय ॥

B सन्ति...मनस्वय...न्द्राः ।

वर...नागपुष्पान्...नाय ॥

8 B छिफसिल ; C विद्धशील 9 B योग 10 C ०त

11 B राजगृह 12 C drops अपि

13 A स्थितु तस्य ; B पुरतु स्थितः सु०

अलकवती[1] समग्र राजधानी[2]
शून्य अभू[षि न तत्र[3] कश्चि यक्षः ।
सर्वि[4] क्रिय क]रित्व अन्यमन्यम्
उपगत पश्यितु सर्वलोकनाथम्[5] ॥७४॥
तथपि च खरकर्ण[6] सूचिरोमा
आटविकस्तथ यक्ष भेषकश्च[7] ।
हैमव[त[8] शतगिरिश्च यक्ष
उपगत गर्द]भको जिनं[9] स्वयंभूम् ॥७५॥
[इन्द्रकेतु विकटश्च सुरूपो
वक्कुलु पञ्चिकु शाक्य प्रवृद्धो ।
एते परेऽपि च यक्षेन्द्रसहस्रा
उपगतु धूपघटं परिगृह्य][10] ॥७६॥
विकृत बहु दुःसंस्थितात्मभावा[11]
[12]विगलित-आभरणा अनेकरूपाः ।

1 B अतगवति ; C अटकवति  2 C राजधानीं  3 B अभूषित तत्र
4 B सर्व  5 B तत्र अन्यं उप० ; C ०नित्व अन्यमन्या उपगत पश्यतु सर्वि लो०
6 B खरकणु ; C तदपि च खरकर्ण
7 B अठवकस्तथ यक्ष मेषकश्च ; C सूचिरोमो आटकवस्तथ यक्षभैसकश्च
8 B हैमवतु ; C हेमव  9 A ०भवाजिनं
10 B adds इन्द्र......टास्य सुरूपाः वत्तुलु पाञ्चिकु शाक्यु प्रबन्धो ।
एते परपि च यक्षेन्द्रसहस्रा उपगतु धूपघटा विगृह्य ॥
11 B बहुवु संस्थि०  12 B & C विगडित

बह्व[1] शतसहस्र तस्मि काले

[उपगत तत्र गृहीत्व यक्षपुष्पान्[2]] ॥७७॥

जलनिधि निवसन्ति ये सुपर्णा[3]

उपगत ब्राह्मणवेश निर्मिणित्वा[4] ।

मुकुटधर विचित्रदर्शनीया

गगनस्थिताः [सुगतं नमस्यमानाः ॥७८॥

1 C बहु च

2 A adds

गौतमुगस्ति बृहस्पति जह्नु काश्यपु कौशिक्यु मार्कण्डोऽपि ।
विश्वामित्र-पराशरु-गर्गा उपगतु सर्वि नमस्यितु बुद्धम् ॥
तथपि च नारदु तुष्ट उदग्रो व्यास ऋषि चापि अङ्गिरसो च ।
कुत्स वशिष्ठ मनु भृगु वत्सो उपगतु तेऽपि च वन्दितु बुद्धम् ॥
जामनि वामनि वैशंपायनि जामदग्नीपि च वल्मिकु ऋषिवरु ।
दुर्वासाथ च च्यवनु शनैश्चरु उपगतु पुरुषवरु नायकु द्रष्टुम् ॥
दृष्ट्वा ऋषिं ऋषयस्तद प्रीता वन्दिषु चरणवरौ मुनिराज्ञः ।
स्तुत्यभिवंद्य च लोकप्रदीपं प्राञ्जलयः पुरतः स्थितु वीरे ॥
ऋषिगण सर्विय केचिह लोके उपगत पश्यतु तेऽपि नरेन्द्रम् ।
दृष्ट्व च पूज करित्व उदारां प्राञ्जलयः पुरतः स्तवि बुद्धम् ॥

B गौतमु गभस्ति......कास्यव कोशिक मरकण्डोऽपि ।
विश्वा......उपगन्तु......मान बुद्धम् ॥
तथ......उदग्रा......रीषि च अङ्गिरसा च ।
कुत्स......उपगत......वन्दितु बुद्धम् ।
जामणि वामणि......यन......वल्मीकु...... ।
दुर्वासोऽथ च च्यमनु...श्चरुपगतु पुरुवरु...... ॥
दृष्ट रिषिन......पीता......णवरा मुनिराजो ।
स्तुत्य... ... ...वीरे ॥
ऋषि ... ...उपगता पश्यितु.........नरेन्द्रम् ।
दृष्ट्व.........सदाराः.........पुरतस्तुवि० ॥

Tib. 63a, l. 1-6 follows A & B.

3 B निवसन्ति येषु पश्य ; C निभस० 4 C ब्राह्मवेश निर्मिहित्वा

नगरशत ये] केचि[1] जम्बुद्वीपे
वनविहरेषु य तत्र[2] देवताश्च ।
[3]सर्व नगरदेवताः समग्रा
उपगत पूज करोन्त[4] नायकस्य ॥७९॥

[उपगत वनदेवता अनन्ता-
स्तथपि च सर्वि य[5]] शैलदेवताश्च ।
तथपि च नदिदेवताः समग्रा[6]
उपगत पूज करोन्त[7] नायकस्य ॥८०॥

अटविमरुषु देवताशतानि
गि[रिशिखरेषु[8] य देवताः समग्राः ।
उत्स-सर-तडा]गदेवताश्च[9]
उपगत[10] सागरदेवताश्च बुद्धम्[11] ॥८१॥

देव-असुर-नाग-यक्षसंघा
गरुड़-महोरग-किन्नराः कुं[भाण्डाः ।
तथपि च बहु प्रेतपूतनाश्चो[12]
पुरुष]वरस्य करोन्ति[13] चित्रिकारम्[14] ॥८२॥

1 B नगरपतय केचि 2 A & B ०रेषु तत्र ; Tib. 63b, l. 7 : ནགས་ ཚལ་ན་ གནས་ཤིང་ རྟེན་པའི་ལྷ་རྣམས་གང=वनषण्डेषु ये वृक्षदेवताश्च
3 A & B सर्वि 4 B करोति 5 A ०थपि सर्वय
6 A drops समग्रा ; B नदी० 7 B करोति
8 A अटवियमरुदेवताशतानां गि० ; B ०वता समग्राः गि० ; Tib, 64a, l. 1 : རྒྱ་ངམ་དགོན་པའི་ལྷ 9 C ०कदेव० 10 A उपगतु 11 A ०देवता बु०
12 B ०प्रेतनाश्चो 13 A करोन्त ; C ०वरस्मि क०
14 Tib. 64a, l. 3 : རི་མོར་བྱ་བ་བྱེད །

तेऽपि च[1] जिनवरे[2] करित्व पूजां[3]
नगरवरं प्रविशन्ति नायकस्मिन् ।
देव असुर नाग यक्ष रा[जा
सततमतृप्त भवन्ति दर्शनेन ॥८३॥
यथ] पुरिम भवेषु लोकनाथः[4]
पुरिम जिनेषु अकार्षि पूज श्रेष्ठाम् ।
पुण्यफल विपाक एवरूपो[5]
न च जनु तृप्तु[6] नरेन्द्र प[श्यमानः ॥८४॥
मेरु तथ सुमेरु चक्रुवाला]
हिमगिरिस्तथ[7] गन्धमादनश्च ।
आवरणा न ते जिनस्य भोन्ति
आभ यदा जिनु मुञ्चि[8] बुद्धक्षेत्रे ॥८५॥
ये च इह समुद्र[9] [बुद्धक्षेत्रे
तेऽपि महीय समा]स्तदा[10] भवन्ति ।
सर्वमिमु समन्तु[11] बुद्धक्षेत्रं
समु भवती कुसुमेहि संप्रकीर्णम्[12] ॥८६॥

1 A & B drop च 2 A जिनवरु 3 B नित्यपूजां
4 C भवे सुलो० 5 B एवरूपि 6 B जन तृप्त ; C तृप्त
7 B चक्रवाडा हिमगिरि तथ ; C हिमवगि० 8 B अवरशन ते जिनस्य भोन्ति आश्चर्य यदा जिनमञ्चि 9 A स समुद्र 10 B महिय समात्तदा
11 A सर्विमिश्र समन्तु ; B सर्विमिमु समन्त
12 B ०कीर्णाम्

रश्मि शत सहस्र अप्रमेया
अव[किरि[1] पादतलेहि[2] धर्मराजा ।
सर्वि] निरय शीतला भवन्ति
दुःख अपनीत सुखञ्च वेदयन्ति ॥८७॥
धर्म दशबल संप्रभाषि तत्रो
मरुमनुजान विशुद्ध[3] भोति चक्षुः ।
[प्राणिशतसहस्र अप्रमे]या[4]
नियत[5] भवन्ति च सर्वि बुद्धज्ञाने ॥८८॥
बहु इमि सुगतस्य प्रातिहार्या
न सुकरु वक्तु च कल्पकोटियेभिः[6] ।
पुरवर प्रवि[शन्ति नायकस्मिन्
प्रमुदित] सर्व जगज्जिनप्रवेशे[7] ॥८९॥
इमि[8] गुणाः सुगतस्य अप्रमेया
नरवृषभस्य गुणाग्रपारगस्य[9] ।
सर्वगुणविशे[षपारगस्य[10]
शिरसि नमस्य]थ बुद्धपुण्यक्षेत्रम्[11] ॥९०॥

[इति श्रीसमाधिराजे[12] पुरप्रवेशपरिवर्तो नाम दशमः] ॥१०॥

1 A नवगिरि ; Tib. 64b. 1. 1: ཆོས་ཀྱི་རྒྱལ་པོའི་ ཞབས་ཀྱི་ མཐིལ་ནས་ བྱུང་། 2 B अवसरिया जनलेहि
3 C ०मनुज विशुद्ध 4 B drops ll. 3-7. 5 B सर्वि निरभवन्ति
6 B प्रातिहार्या न सुकरु वक्रत कल्प० ; C प्रातिहार्या न सुकरु वक्रत कल्पकोटियेहि
7 A सर्वि जगु जिन०; B प्रमुदितु सर्वि जना जिन० 8 B इमु
9 B ०वृषभ यस्य गुणा० ; C ०गतस्य 10 B गुणाविशेषे पा०
11 C बुद्धमत्त्क्षेत्रम् 12 B drops इति श्रीसमाधिराजे

## एकादशपरिवर्तः

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्य[1] निवेशनरथ्यामवगाहमानश्चन्द्रप्रभस्य[2] कुमार[भूतस्य निवेशनं प्रविष्टोऽभूत्]। प्रविश्य च न्यषीदत् प्रज्ञप्त एवासने। यथार्हे चासने बोधिसत्त्वसंघो भिक्षुसंघश्च निषण्णोऽभूत्[3]। अथ खलु चन्द्रप्रभः कुमारभूतो भगवन्तं बोधिसत्त्वसंघं भिक्षुसंघं च निषण्णं[4] विदित्वा स्व[यमेव[5] शतरसेन भोजनेन[6] प्र]णीतेन प्रभूतेन खादनीयेन भोजनीयेन[7] लेह्येन चोष्येण पेयेन[8] भगवन्तं संतर्प्य संप्रवार्य[9] भगवन्तं भुक्तवन्तमप[नीतधौतपाणिं[10] विदित्वा दिव्येन नवन]वतिकोटीशतसहस्रमूल्येन दूष्ययुगेन[11] भगवन्तमभिच्छादयामास। तेषां च बोधिसत्त्वानां भिक्षुसंघ[स्य च प्रत्येकं प्रत्येकं त्रिचीवरमदा]दिति[12]।

1 B ०भकुमार०  2 B ०गाहृयमान०

3 C drops यथार्हे.........भूत्

4 A ०वन्तं सबोधिसंघं बोधिसत्त्व संघश्च नि०; C ०वन्तं बोधिसत्त्वसंघं सभिक्षुसंघं नि०

5 A विदित्वा महतीमर्घपाद्यानुपूर्वीं कृत्वा स्वयमेव०; B ०दित्वा महति सहार्घपाद्यानुपूर्वान् कृत्वा स्वयमेव  6 B भोजनीयेन

7 B खादनीय भोज०; C भोजनेन  8 C पानीयेन  9 B & C संप्रचार्य

10 B ०वन्तमपनीय धोतपात्रपाणी  11 B ०युग्मेन

12 B त्रिचीवलमाददाति; C drops इति

अथ[1] खलु चन्द्रप्रभः कुमारभूत[2] एकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य भगवतः [पादौ शिरसाभि-

1 Before अथ A puts दत्त्वा चोत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दिव्यैर्मान्दारवपुष्पैर्भगवन्तमभ्यर्च्य चाभिवन्द्य च येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तं सारूप्याभिर्गाथाभिरभ्यष्टावीत् ।

अविग्रहा अनुत्पन्ना अनिरुद्धा अचिन्तिया ।
रूपलक्षणसम्पन्ना नमस्ते गुणसागराः ।
प्रज्ञया जनिता वीरा उपायबलविक्रमाः ।
आकाशवत ये बुद्धा नमस्ते क्षान्तिपारगाः ।
स्मृत्युपस्थानविहारगोचरा प्रामोद्यप्रीतिनयना तथागताः ।
समाधिपाना वरध्यानगोचरा नमस्तु ते शून्यअरण्यवस्थिताः ।
रूपकायं च दर्शेसि करुणावोपेता जिनाः ।
येन सत्त्वानुकम्पाय पिवन् भुंजन् प्रदृश्यसे ।
अहो अचिन्तिया बुद्धा सर्वलोकविनायकाः ।
यं वाभिपूज्य लोकोऽयं याति निर्वाणमुत्तमम् ।
एवं स्तवित्वा असमसमैकनाथं गिरं प्रभाषि मुदितमनाः कुमारः ।
भोजित्व बुद्धं अतुलीय अचिन्त्यकायं बुद्धो भवेयं यथ तुम देवदेव इति ॥

अथ खलु चन्द्रप्रभः कुमारभूतो दिव्येन शतरसेन भोजनेन संतर्पयित्वा दिव्येन चानर्घेण वस्त्रयुगेनाच्छाद्य दिव्यैश्च मान्दारवैः पुष्पैर्भगवन्तमभ्यर्च्याभिवन्द्य सारूप्याभिश्च गाथाभिरभिष्टुत्य

B दत्त्वा...मान्दारवैर्भग...भ्यर्च्याभिवन्द्य येन...रभ्यष्टावीत्

अवि०......न्तिया ।
रूप......गराः ।
प्र......परिविक्रमा ।
आकाशचेतिया......क्षान्तिपारगाः ।
स्मृति उपस्थाय......प्रमोद्य प्रीतिनयना......।
समाधिपाना......भोजना नमोऽस्तु ते शून्यतरं न्यवर्द्धिता ॥
रूप......देशेसि......०वशिता......।
येन............विवभुंज प्रदृश्यते ।
अहो............यकाः । यं त्वाभि.........मुत्तमम् ॥
एवं......कुमारः ।
भोजित्व......चिन्त्यकायं......इति ॥

अथ......भूतो भगवन्तं दिव्येन......वन्द्य च ष्टुत्य

2 A & B drop अथ खलु चन्द्रप्रभः कुमारभूतः

वन्द्य[1] येन भगवांस्तेना]ञ्जलिं प्रणम्य भगवन्तं गाथाभिगीतेन प्रश्नं परिपृच्छति स्म[2] ।

कथं चरन्तो विदु बोधिसत्त्वः
स्वभावु धर्माण सदा प्रजा[नते ।
कथं क्रियामाचरते[3] विचक्षणः
क्रिया]य भोतारु[4] वदाहि नायक ॥१॥

कथञ्च जातिस्मरु[5] भोति नायक
न चापि गर्भे[6] उपपद्यते कथम् ।
कथं परीवारु [भवेदभेद्य[7]
प्रतिभानु भोतीह कथमनन्तकम्[8]] ॥२॥

सर्वेष सत्त्वान[9] चरिं[10] प्रजानसे
सर्वेषु धर्मेष्वभिज्ञानु[11] वर्तते ।
अनभिभूता द्विपदानमुत्तमाः
पृच्छामि प्रश्नं [मम व्याकरोहि] ॥३॥

[स्वभावधर्माणम]भावु जानसे
अनभिलप्यां गिर[12] संप्रभाषसे ।

1 B वन्दित्वा
2 A ०गीतेन मनसा प्रश्नं प्रपृ० ; B मनसा प्रश्नं पृच्छति स्म ; C drops स्म
3 B मो चरते वि०
4 A क्रियाय जातारुः Tib. 65b, l. 7



5 A कथञ्च जानाति स्म०
6 B गर्भो उप०
7 A वदभेद्यः
8 A प्रतिज्ञानु भोतीह कथमनन्तकम् ; B भोन्तिह कथमनन्तकः
9 B सर्वेषु स०
10 A चरीं
11 A सर्वे बुद्धधर्मेष्व० ; B सर्वेषु धर्मेषु तज्ज्ञानु ; C सर्वेषु धर्मेषु ति ज्ञान वर्तते
12 B ०प्याङ्गिन संप्र०

सिंहेन वा धर्षित सर्व क्रोष्टका-
स्तथैव बुद्धेनिह अन्यतीर्थिकाः[1] ॥४॥
सर्वे[ष सत्त्वान चरिं प्रजानसे
सर्वेषु धर्मेषु] ज्ञानानुवर्तते[2] ।
असंगज्ञानी परिशुद्धगोचरा[3]
तं व्याकरोहि मम धर्मस्वामी[4] ॥५॥
अतीतु जानासि तथा अनागतं
य[च्च इहा वर्तति[5] प्रत्युत्पन्नम् ।
त्रियध्व]ज्ञानं ति असंगु वर्तते
तेनाह पृच्छामिह[6] शाक्यसिंहम् ॥६॥
त्रियध्वयुक्तान जिनान धर्मता
त्वं धर्मतां[7] जानसि धर्म[राज ।
धर्मस्वभावकुशलः स्वयं]भू-
स्तेनाहु[8] पृच्छामिह ज्ञानसागरम् ॥७॥
यत् किञ्चि धर्मं स्खलितं न तेऽस्ति
ततो ति[9] चित्तं निखिलं प्रहीणम् ।

1 B चानिर्जितसर्वलोको तथैव बुद्धेनिहि अन्य० 2 A drops last two lines of vs. 3, 4 & the first two lines vs. 5. Tib. 66a, 1. 4: ཆོས་ རྣམས་ཀུན་ལ་འང་ ཡེ་ཤེས་ རྗེས་སུ་འཇུག 3 A असंज्ञज्ञा० ; B अशुद्धज्ञानी परिशुद्धिगोचरा ; C परिशुद्ध गौरवा 4 C तथा क्रोध मम धर्म० 5 B यतो हि इहा व० 6 B असन्तु वर्तते तेनाहू पृ० ; C पृच्छाम्यह
7 A वाधर्मतां ; C वाजिनानु धर्मतां वा० 8 B स्वयंभुन्तेनाहु पृ० 9 A तनोति चि०

प्रहीणग्रन्थाखिलमोह[सादका[1]
देशेहि मे बोधिचरिं नरेन्द्र] ॥८॥
यल्लक्षणा धर्म जिनेन बुद्धा-
स्तल्लक्षणं धर्म[2] मम प्रकाशय ।
यल्लक्षणं [3]धर्ममहं[4] विदित्वा
तल्लक्षणं बोधि चरिष्यि[5] चा[रिकाम् ॥९॥
विलक्षणां सत्त्वचरी]मनन्तां[6]
कथं चरन्तश्चरिमोतरन्ति[7] ।
चरीप्रवेशं[8] मम देशय स्वयं
श्रुत्वा [च] सत्त्वान चरिं प्रजानयम्[9] ॥१०॥
विलक्षणं धर्मस्व[भावलक्षणं
स्वभावशून्यं प्रकृती]विशुद्धम्[10] ।

1 A & B ०स्राटका ; Tib. 66a, l. 7: གཏི་མུག་རབ་ཏུ་བཅད

2 B drops जिनेन बुद्धास्तल्लक्षणं धर्म    3 B यल्लक्षणां ध०

4 C तल्लक्षणं धर्म अहं    5 B चरिष्य    6 B सत्त्वचरीननन्ता

7 A-B & C ०श्चरिमोत्तरन्ति    8 A चरिप्रदेशं

9 A & C प्रजानियाम् ; Tib. 66b, ll. 1-2:

སེམས་ ཅན་སྤྱོད་པ་ མི་མཐུན་ མཐའ་ ཡས་པ །
ཇི་ལྟར་ སྤྱོད་པ་ སྤྱད་པར་ འདུག་ པ་ལགས །
གང་ཐོས་ སེམས་ ཅན་ སྤྱོད་པ་ འཚལ་ འགྱུར་བ །
སྤྱོད་ལ་ འཇུག་པ་ བདག་ལ་ པ་ཤད་དུ་ གསོལ ॥

10 C विविक्तम्

प्रत्यक्ष भोन्ति[1] कथ बोधिसत्त्वाः[2]
प्रकाशयस्व मम बुद्धनेत्रीम्[3] ॥११॥
सर्वेषु धर्मेष्विह पारमिंगताः
सर्वेषु निर्देशप[देषु शिक्षिताः ।
निःसंशयी संशय]काङ्क्षछेदकाः
प्रकाशयाही[4] मम बुद्धबोधिम् ॥१२॥

अथ खलु भगवांश्चन्द्रप्रभस्य[5] कुमारभूतस्य चेतसैव चेतः-परिवितर्क[माज्ञाय चन्द्रप्रभं कुमारभूतमा]मन्त्रयते स्म । एकधर्मेण कुमार समन्वागतो बोधिसत्त्वो महासत्त्वः[6] एतान् गुणान् प्रतिलभते । क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसं[बुध्यते । कतमेनैकेन धर्मेण । इह कु]मार बोधिसत्त्वो महासत्त्वः सर्वधर्माणां[7] स्वभावं यथाभूतं प्रजानाति[8] । कथं च कुमार बोधिसत्त्वो महासत्त्वः सर्व[धर्माणां स्वभावं जानाति[9] । इह कुमार] बोधिसत्त्वो महासत्त्वः सर्वधर्माननामकान् नामापगतान्[10] प्रजानाति । घोषापगतान् वाक्पथापगतान् अक्षराप[गतान् उत्पादापगतान् निरोधापगतान् हेतु]विलक्षणान् प्रत्ययविलक्षणान्[11] विवेकलक्षणान्

1 B ०शान्ति 2 B ०सत्त्वां ; Tib. 66b, l. 3:
བྱང་ཆུབ་ སེམས་ དཔས་ ཇི་ལྟར་ མངོན་སུམ་འགྱུར་ །

3 Tib. 66b, l. 3: ཆོས་ཀྱི་ ཚུལ་རྣམས

4 B ०काः प्रकाशयामी ; C ०क प्रका० 5 B drops स्य 6 C drops महासत्त्वः

7 B ०संवोत्स्यते कथमनेकधर्माण इह कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माणां स्वभावो नास्ति कथञ्च कुमार बोधिसत्त्वो महासत्त्वः सर्व० 8 A & B स्वभावं जानाति

9 B drops कथं च...जानाति 10 B सर्वधर्माशमकानामपगता ; C सर्वधर्मान्ननामकानामापगतां 11 B & C add विपाकलक्षणान् आरम्भणलक्षणान्

एकलक्षणान्[1] यदुताल[क्षणान् निमित्तापगतान् अचिन्त्यांश्चिन्ता-पगतान्] मनोऽपगतान् सर्वधर्मान् यथाभूतं[2] प्रजानाति । अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अ[भाषत[3] ।

एकु निर्देश धर्माणां सर्वधर्माः] अलक्षणाः[4] ।
देशिता वरप्रज्ञेन यथाभूतं[5] प्रजानता ॥१॥
य एवं[6] धर्मनिर्देशं बोधिसत्त्वः प्रजानति ।
न तस्य भोति [विष्ठानं सूत्रकोट्या प्रभाषतः[7] ॥२॥
अधिष्ठितो ना]यको हि[8] भूतकोटीं प्रजानति ।
प्रजानाति च तां कोटीं न चासौ किञ्चि भाषितम्[9] ॥३॥
एकेन सर्वं जानाति सर्वमेकेन पश्यति ।
किय[द् बहुं पि[10] भाषित्वा न तस्योत्पद्यते मदः[11]] ॥४॥
तथास्य चित्तं निध्याप्तं सर्वधर्मा अनात्मकाः[12] ।
शिक्षितो नामनिर्देशे भूतां[13] वाचं प्रभाषते ॥५॥
शृणोति घोषं यं कश्चित्[14] पूर्वान्तं त[स्य जानति ।
ज्ञात्वा घोषस्य पूर्वान्तं] घोषेण ह्रियते न सः[15] ॥६॥

1 C अनेकलक्ष० ; Tib. puts यदुत before अलक्षणान्  2 A drops यथाभूतं
3 B घोषाय पगता वाभ्युपगतां नक्षरापगतामुपादां पगतान्निरोधापगता हेतुलक्षणा-प्रत्ययलक्षणं विवेकलक्षणं निमित्तानिमित्तपगतान चिन्ता चित्तापगता मनो इयं कुमार पगता धर्मणोपगतः सर्वधर्मान् प्रजानाति । अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत ।
4 B अलक्षणाम् ; C सुलक्षणाः  5 B ०ता च न प्रज्ञेन यथाभूतां
6 B यत्र तं ; C एतं  7 A भूतकोट्यः प्र० ; B निष्ठानं सूत्रकोट्याः प्रभाषत
Tib. 67a, l. 6: དེ་ལ་བྱང་ཆུབ་ཀྱུན་ཆད་མེད །
8 B ०ष्ठिता नायकेभि ; C ०यकेभिर्भू०  9 A भाषितुम्
10 B बहुस्मि  11 A सदः  12 A & C अनामकाः
13 B नामदिर्देशं भूतं  14 A घोषेयं किञ्चित् ; B घोषं यत्किञ्चित्  15 B तमः

यथा घोषस्य पूर्वान्त एवं[1] धर्माण लक्षणम्[2] ।
एवं धर्मान् प्रजानन्तो न गर्भेषूपपद्यते[3] ॥७॥
[अजातिः सर्वधर्माणाम]नुत्पत्तिं[4] प्रजानति ।
प्रजानन् जातिनिर्देशं[5] भवेज्जातिस्मरः सदा ॥८॥
यदा जातिस्मरो भोति तदा [च] चरते[6] क्रियाम् ।
क्रियामोतर[माणस्य परिवारो न भिद्यते[7] ॥९॥
य] एवं शून्यकान् धर्मान् बोधिसत्त्वः प्रजानति ।
न तस्य किञ्चिदज्ञातमेषा[8] कोटिरकिञ्चना[9] ॥१०॥
अकिञ्चनायां कोट्यां हि[10] किञ्चिद् बा[लैर्विकल्पितम् ।
येन ते कल्प]कोटीयः संसरन्ति[11] पुनः पुनः ॥११॥
स चेत्ते कल्प जानीयुर्यथा जानति[12] नायकः ।
न तेषां दुःखु जायेत नापि ग[च्छेयु दुर्गतिम् ॥१२॥
एवं पृथग्जनाः] सर्वे[13] अजानन्त इमं नयम्[14] ।
क्षिपन्ति ईदृशान् धर्मान्[15] यत्र दुःखं निरुध्यते ॥१३॥
अलब्धिः[16]सर्वधर्माणां धर्मसंज्ञा प्रवर्तते[17] ।
सा[18] [एवंजातिका संज्ञा संज्ञामेवं वि]जानथ ॥१४॥

1 A & B पूर्वान्तमेवं 2 A धर्मस्य लक्षणम्
3 B ०न्तो तमस्तेषूप० 4 B ०त्पत्तिः 5 B प्रजातजाति०
6 A तदा जात्युरित ; B तदा नावरजि 7 B विद्यते 8 A एषां
9 A ०षां कोटोर० ; B कोटिर्नकिञ्चना 10 B अकिञ्चनायाः कोट्या हि
11 C संसरन्ते 12 A कल्पकोटीयो यथा जानाति ; B जानाति
Tib: 67b, l. 7: གལ་ཏེ་དེ་དག་རྟོག་རིག་ན 13 B एवं पृथग्गुणाः सर्वे
14 A अस्तरन्त इमं भयं ; Tib. 67b, l. 7: ཚུལ 15 B ईदृशधर्मा
16 C अलब्धी 17 B धर्मसञ्चय वर्तते ; C ०संज्ञाय व० 18 A ता

विजानना[1] च संज्ञा च बालैरेतद् विकल्पितम्[2] ।
प्रकल्पितेषु[3] धर्मेषु नात्र मुह्यन्ति पण्डिताः ॥१५॥
पण्डितानामियं भूमिर्बा[लानां नात्र गोचरः[4] ।
गोचरो बुद्ध]पुत्राणां [5]शून्या धर्मा अनाविलाः[6] ॥१६॥
बोधिसत्त्वानामियं भूमिर्बुद्धपुत्रचरी इयम् ।
बुद्धधर्माणलंकारो देशिता शान्त शू[न्यता ॥१७॥
यदा च बोधिसत्त्वानां प्रही[णा भोति वासना ।
न ते ह्रियन्ति रूपेहि[7] बुद्धगोत्रस्मि ते स्थिताः[8] ॥१८॥
अस्थान[9] सर्वधर्माणां स्थानमेषां न विद्यते ।
[य एवं स्थान[10] जानाति बोधिस्तस्य न] दुर्लभा ॥१९॥
दानं शीलं श्रुतं क्षान्तिं सेवित्वा मित्रभद्रकान् ।
इमां क्रियां विजानन्तः क्षिप्रं बोधिं स बुध्यते[11] ॥२०॥

देवाश्च[12] नागाः [सद सत्करोन्ति
गन्धर्वयक्षा असुरा] महोरगाः ।
सर्वे च राजान सुपर्णि किन्नरा[13]
निशाचराश्चास्य करोन्ति पूजाम् ॥२१॥

1 A विजानता ; C विजानका
2 B विजानना च संज्ञा च चोभे ते तद्विक०
3 A अकल्पिकेषु ; B अकल्पिते बुद्धधर्मे
4 A संशयः
5 C ०धर्माणां
6 B शून्यधर्मात्मना विला
7 C रूपेण
8 B ०त्रस्मि ता स्थिता
9 B अस्थानां
10 B यत्र च स्थान
11 B इमाः क्रिया विजानन्तो क्षिप्रं बोधिश्च बुध्यति
12 B & C देवाश्च
13 B सुपर्णकिं०

यशोऽस्य भाषन्ति च[1] बुद्धकोटियो
बहु[कल्पकोट्योऽपि अधिष्ठिहन्तः[2] ।
धर्मं प्रकाश]न्तिय[3] भोति वर्णो
न[4] शक्यु पर्यन्तु क्षपेतु[5] तस्य[6] ॥२२॥

यः शून्यतां जानति बोधिसत्त्वः
करोति सोऽर्थं[7] बहुप्राणिको[टीनाम्[8] ।
देशेति धर्मं पर्यायसूत्रतो[9]
श्रुत्वा]स्य प्रेमं जनयन्ति गौरवम् ॥२३॥

ज्ञानञ्च तेषां विपुलं प्रवर्त्तते[10]
येनेति[11] पश्यन्ति नरोत्तमान् जिनान्[12] ।
क्षेत्रे च[13] पश्यन्ति वियू[ह[14] शोभनं
धर्मञ्च देशेन्ति ते लोकनाथाः[15]] ॥२४॥

मायोपमान् जानथ सर्वधर्मान्
यथा[न्तरी]क्षं प्रकृतीय[16] शून्यम् ।
प्रकृतिं पि[17] सो जानति तेष तादृशी-[18]
मेवं चरन्तो [न कहिंचि सज्जति[19] ॥२५॥

1 C भासं च 2 B °कोट्यापि अधिष्ठिहन्ता ; Tib. 68b, l. 1: མི་འཆད་པར
3 B प्रकाशेन्तिय 4 A वर्णोन ; B वर्णान 5 A क्षपेत्तु ; C पर्यन्त क्षमेतु
6 B पर्यन्त क्षेपेतुमस्य 7 A स्वार्थं ; B सार्थ 8 C °प्राण°
9 B देशेति धर्मे पर्यायशून्यतां ; Tib. 68b, l. 2: ཤིན་ཏུ་ངེས་པས་འཁོར་ལ་ཆོས་སྟོན་ཏེ །
10 C °लं च वर्तते 11 C तेनेति
12 C नरोत्तमं जिनम् 13 A क्षेत्रं च 14 for व्यूह
15 B त लोकनाथः 16 B प्रकृती च 17 B प्रकृतिस्मि
18 B तेषु तादृशी एवं ; C यादृशी° 19 B सर्ज्जति

ज्ञानेनासंगेन क]रोति सोऽर्थं[1]
लोके चरन्तो वरबोधिचारिकाम् ।
ज्ञानेन ते वीक्षिय सर्वधर्मान्
प्रेषेन्ति ते निर्मित[2] अन्यक्षेत्रान् ॥२६॥
ते[3] बुद्धकृत्यं [करियाण निर्मिता[4]
प्रकृतीय] गच्छन्ति यथैव धर्मताम्[5] ।
यथाभिप्रायं च लभन्ति तेऽर्थं[6]
ये बोधिचित्तस्मि[7] नराः प्रतिष्ठिताः ॥२७॥
स भोति[8] बुद्धान स[दा कृतज्ञो
यो बुद्धवंशस्य स्थितीय][9] युज्यते ।
विरोचमानेन समुच्छ्रयेण
द्वात्रिंश कायेऽस्य[10] भवन्ति लक्षणाः ॥२८॥
अन्याननन्तान् बहु आनुशंसान्[11]
श्रेष्ठं[12] समाधौ च[रमाणु[15] लप्स्यते ।
महाबलो भोति] सदा अकम्पियो[14]
राजान तस्यो न सहन्ति[15] तेजः ॥२९॥

1 A ०गो न कर्हिचि तेर्थ ; B ज्ञानेन सङ्गेन करोन्ति तर्क
2 A प्रेक्षते नि० ; B प्रेध्वन्ति ते नि० 3 C drops ते 4 B निर्मितां
5 C धर्मता 6 C ०न्ति अर्थ 7 B बोधिसत्त्वस्मि
8 C सहेति 9 A ०वंशस्य स्थिरीय 10 B कायस्य
11 B लक्षणां अन्योन्येन नन्ता बहु आनुशंसा 12 B श्रेष्ठः ; C drops श्रेष्ठं
13 A & B स बोधौ च० ; C बोधिं च सो च०; Tib. 69a, l. 1: ཏིང་འཛིན་མཆོག་ལ
14 A ०म्पिया 15 C वसन्ति

प्रासादिको भोति महाभिरूपः
पुण्येन तेजेन शिरीय चोद्गतः[1] ।
देवापि नो तस्य [सहन्ति तेजो
यो बुद्धधर्मे]षु चरेय[2] पण्डितः ॥३०॥
मित्रं स भोति सद सर्वप्राणिनां
यो बोधिचित्तस्मि दृढं प्रतिष्ठितः[3] ।
न चान्धकारोऽस्य कदाचि भोति
[प्रकाशयन्तस्मि स बुद्धबोधिम्[4]] ॥३१॥
अपगतगिरवाक्पथा[5] अनभिलप्या
यथ गगनं तथ ताः स्वभावधर्माः[6] ।
इम[7] गति परमां विजानमानो
तथतु[8] भ[वति प्रतिभानु अक्षयं से[9] ॥३२॥
सूत्र]शतसहस्र भाषमाणः[10]
सूक्ष्म प्रजानति[11] पूर्विकां स कोटिम् ।

1 A महाभिषङ्कः पुरायेन तेजेन गिरीय चाङ्गतः ; B महाभिशक्रः पुरायेन तेजेन सिरीय चोद्गताः ; C महाभिषट्कः पुरायेन तेजेन शिरीय चोद्गतः

2 B चनेय्य

3 B दृढप्रतिष्ठितः

4 A प्रकाशयन्तस्यमु बुद्ध०

5 B ०गिरिवाभ्युथा

6 A ०गिरिवाक्यथा अनल्पायथ गगने तथ ता स्वभावशून्या

7 A इति

8 A तत्तु ; C विजायमानो ततु

9 B ०भानु अक्षय ; Tib. 69a, l. 5 :

འདི་ལྟ་བུ་ཡི་ཚུལ་མཆོག་ [?] རིག་ན །
དེ་ཡི་སྤོབས་པ་ དག་ཀྱང་མི་ཟད་འགྱུར ॥

10 B भाष्यमाणः

11 A सूक्ष्मां प्रजानेति

सद विदु भवती[1] असङ्गवाक्यः
सुसुखुम धर्मस्वभावु[2] [जानमानः ॥३३॥
नयशतकुशलश्च नि]त्यु भोति[3]
बहुविधघोषनिरुक्तिकोविदश्च[4] ।
कर्मफलविपाक निश्चिताश्चो[5]
भोन्ति[6] विशिष्ट विशेष एवरूपाः ॥३४॥
अविकलवे[शधारी भोति[7]
दशबल आत्मज][8] पण्डितो महात्मा ।
सद स्मृति परिशुद्धु तस्य भोति
सुसुखुम[9] धर्मस्वभावु जानमानः ॥३५॥
न श्रुणति[10] अमनोज्ञ शब्द[11] जा[तु
श्रूणति[12] प्रणीत मनापु नित्य] शब्दान्[13] ।
सद भवति मनोज्ञ तस्य वाचा
सुसुखुम[14] धर्मस्वभावु जानमानः ॥३६॥
स्मृतिमतिगतिप्रज्ञवन्तु [भोति[15]
तथपि च चित्तमनाविलं प्रसन्नम् ।

1 A भोति ; B स विदु भवति 2 B ०वाक्यः इमु सुखधर्मस्वभाव ; C सुमुख स ध० 3 B ०शलस्य नित्य भोती ; C व्युभूती 4 C ०षसनिरुक्ति० 5 A ०फलविभक्ति० ; B ०फलविरक्तिनिश्चिताश्चो ; C ०फल-विभक्ति० 6 C कोन्ति 7 B ०कलभाववेगधारि भोगी 8 B आत्मज्ञ 9 A सुसुखुमु 10 A श्रणुति 11 C drops शब्द 12 B अमना जातु शब्दान् श्रूणाति 13 A प्रणीतमनाप्रनित्य० ; Tib. 69b, l. 2: ངག་དུ་སྙན་ཅང་ ཡིད་འོང་སྒྲ་ ཡང་ཐོས། 14 A सुसुखुमु ; C सुमुखम 15 B स्मृति मति गति प्रज्ञ वल्गु भोगी

सू]त्र शत [सहस्र] भाषते[1] अनेकान्
सुसुखुम[2] धर्मस्वभावु जानमानः ॥३७॥
अक्षरपदप्रभे[द]कोविदश्चो
रुत बहु जानति नै[क[3] अन्यमन्ये ।
अर्थकुशल भोति व्यञ्जनो चो[4]
इम] गुण धर्मस्वभावु जानमानः[5] ॥३८॥
देवमनुजनागराक्षसानाम्[6]
असुरमहोरगकिन्नराण नित्यम् ।
तेष सद[7] [प्रियमनाप भोति[8]
सुसुखुम धर्म]स्वभावु जानमानः ॥३९॥
भूतगणपिशाचराक्षसाश्चो
परम सुदारुण ये च मांसभक्षाः[9] ।
तेऽस्य भयु[10] न जातु संज[नेन्ति[11]
सुसुखुम धर्मस्वभावु जानमानः[12]] ॥४०॥

1 B & C शत प्रभाषते 2 A सुसुखुमु ; C सुमुखम

3 B त्रुत बहु जानति नेक 4 A अति कुशल भोति व्यञ्जनो चो

5 A drops अक्षर...जानमानः ; B जानमाने ; Tib. (69b, l. 3-4) puts the last line of verse 37 here and this line in verse 37. 6 A ०यक्षराक्ष०

7 C ते सम 8 A प्रियो मानाप भो० ; B ते सद प्रियामनाय भोती

9 B ०दारुण च मासभक्षाः 10 A ०स्य भुयो ; B तस्यु भय ; C ते सभयु

11 B संजनेति 12 B inserts here the following verses but these are wanting in A, C and Tibetan :—

ये जीविकार्थेन करोन्ति पापं अधिमुक्तिसम्पन्न य बोधिसत्त्वाः ॥
अनुमोदमी तेषु य किञ्चि पुण्यं अनुमोदमी येषु प्रसादबुद्धेः ।
धर्मप्रसादोऽस्ति तथैव संघ अनुमोदमी ये सुगतस्य पूजाम् ॥
कुर्वन्ति बोधिं प्रतिकाङ्क्षमाणाः ...................... ।

विपुल कथं श्रुणित्व[1] पण्डितानां
विपुल प्रजायति[2] रोमहर्ष तेषाम् ।
विपुल तद जनेन्ति बुद्धप्रेमं
विपुल अचिन्तियु [तेषु भोति अर्थः ॥४१॥
पुण्यबल न शक्यु तेष] वक्तुं[3]
बहुमपि कल्प सहस्र[4] भाषमाणैः ।
अपरिमित अनन्त अप्रमेय[5]
इमु सुगतान धरेत्व[6] धर्मगञ्जम्[7] ॥४२॥

अनुमोदमी येहि अनुत्तरायामुत्पादितं चित्तवराग्रबोधये ।
सत्त्वान अर्थाय महामतीनां सम्बोधिवंशस्य च स्थित्यहेतोः ॥
अनुमोदमी ये धनधान्यरत्ना त्यजन्ति अन्तःपुर धीतपुत्रान् ।
राज्यञ्च स्फीतन्तत आत्मनात्मं करणाय आवेशितबोधिसत्त्वाः ॥
अनुमोदमी ये त्यजि आत्मभावं सत्त्वान अर्थाय प्रहृष्टचित्ताः ।
प्रज्ञाय परिभावितदान्तकाया उपायकौशल्यसुशिक्षशिक्षिताः ॥
अनुमोदमी येषु न आत्मदृष्टिर्न भावदृष्टिर्न च जीवदृष्टिः ।
अनुमोदमी येषु न पापदृष्टिर्ये शून्यतां श्रुत्व जनेन्ति तुष्टिम् ।
अनुमोदमी ये सुगतस्य शासने लभन्ति प्रव्रज्यय सम्पदञ्च ।
अल्पेच्छसन्तुष्ट वने वसन्ति प्रशान्तचारित्र लयध्यानगोचराः ॥
अनुमोदमी एकक ये द्वितीया वने वसन्ति सद खड्गभूताः ।
आजीवशुद्धाः सद अल्पकृत्या ये ज्ञानहेतोर्न करोति कुहनाम् ॥
अनुमोदमी येषु न संस्तवोऽस्ति न चापि ईर्षा न फलेषु तृष्णा ।
उत्त्रस्तत्रैधातुक नित्यलम्भा अनोपलिप्ता विचरन्ति लोके ॥
अनुमोदमी येषु प्रपञ्च नास्ति निर्विर्ण-सर्वानुभवोपपत्तिः ।
अविगृहीता उपशान्तचित्ता न दुर्लभस्तेषु समाधिरेषः ॥

1 C श्रुणीतु 2 B प्रजानति
3 B पुण्यबलेन सक्तेषु वक्तुं
4 A बहुमपि सहस्र ; C बहुनपि कलस्म सहस्र
5 A अप्रमेयान् ; C अप्रमेया 6 A धरेय ; B धनेत्व 7 B धर्मराजम्

[सर्व[1] जिन अतीत पूजितास्ते[2]
अ]परिमिता य[3] अनागताश्च बुद्धाः ।
दशसु दिशासु ये स्थिताश्च बुद्धा
इम वर[4] शान्त समाधि धारयित्वा[5] ॥४३॥

यथ [नरु[6] इह कश्चि पुण्यकामो
दशब]लकारुणिकानुपस्थिहेय्या[7] ।
अपरिमित अनन्त कल्पकोटी[8]-
रपरिमितं च जनेतु प्रेम तेषु[9] ॥४४॥

द्वितीय नरु भवेत पुण्य[कामो
इतु परमार्थनयात्तु][10] गाथमेकाम्[11] ।
धरिय चरिम[12] कालि वर्तमाने
पुरिमकु पुण्य कला न[13] भोति तस्य ॥४५॥

परम इयं विशिष्ट[14] बुद्धपूजा
[15]चरिमकि [दारुणि कालि[16] वर्त्तमाने ।
चतु]पदमित गाथमेकु श्रुत्वा
धारयि पूजित तेन सर्वबुद्धाः[17] ॥४६॥

1 B सर्वि 2 A ०तास्तैः 3 B ०मितायु
4 A इमु चरु ; B ०शासु प्रस्थिताश्च बुद्धा इम वर 5 C देशयित्वा
6 B तरु 7 C ०नुपस्थहेय्या 8 A drops कल्प०
9 A जिनेषु तेषु प्रेम ; B जनेत्व तेषु प्रेमं
10 B द्वितीयेनतु भवेत पुरायकामा ईतु परमार्थनया तु 11 C गाथ एकान्
12 A धरयि चरिमि ; B घोरयि चरमि
13 A ०मकु पूर्णकला न ; B परम कुपुरायफलान्न 14 A इय वि० ;
C इय विसृष्ट 15 A वलिमकि 16 B चरम किदा कारुणिका 17 B संविबुद्धाः

परम सद सुलब्ध[1] तेहि लाभा
परम सुभुक्तु[2] [सदा च राष्ट्रपिण्डम्[3] ।
परम दश]बलस्य ज्येष्ठपुत्रा
बहु जिन पूजित तेहि दीर्घरात्रम् ॥४७॥
अहमपि इह दृष्ट गृध्रकूटे[4]
तथ मय व्याकृत तेऽपि बु[द्धज्ञाने ।
अपि च मय परीतु[5] मैत्र]क स्यां
पुनरपि व्याकरणाय तस्मि काले[6] ॥४८॥
तथ पुनरमितायु तेष तत्रो
भाषते बुद्ध[7] अनेक आनुशंसाम् ।
सर्वि[8] इमि [सुखावतीं प्रविष्टो
अभिरति गत्व अ]क्षोभ्य पश्यि बुद्धम्[9] ॥४९॥

1 C अलब्ध     2 B सुभक्त ; C सुभुंक्तु     3 B सदाचराष्ट्र पिण्डः
4 B मृष्ट गृध्रकूटो ; C दृष्ट गृ०     5 B मह परीत्तमै०
6 Tib. 70a, l. 7 :
བྱ་རྒོད་ཕུང་པོའི་རི་ འདིར་ང་ཡང་ མཐོང །
དེ་དག་སངས་རྒྱས་ མཁྱེན་ལ་ང་ལུང་ བསྟན །
ཕྱ་ང་ན་ང་ འདས་ནས་ནི་ བྱམས་པ་ ཡང །
དེ་ཚེ་ དེ་ལ་ ལུང་ ཡང་ སྟོན་ པར་འགྱུར ॥
7 B ०तायुरेष तत्रो भाषति बुद्ध ; C ०रपि तायुते स तत्रो भासते बुद्ध
8 C सर्वे
9 B सुखावतीविशिष्टो अभिरति गन्ध अक्षोभ्य पश्चि बुद्धम् ; C क्षोभ्य पश्य बुद्धम्

कल्पशतसहस्र अप्रमेया
न च विनिपातभयं कदाचि भोति ।
इमु वरु चरमाणु[1] बोधिचर्या-
म[नुभवति स हि नित्य सौमनस्यम्[2]] ॥५०॥
तस्य इमु विशिष्ट एवरूपा
य इमु प्रकाशित श्रेष्ठ आनुशंसाम् ।
प्रतिपदमनुशिक्षमाण मह्य
प[श्चिमि[3] कालि धरेयु एत सूत्रम्[4]] ॥५१॥

[इति श्रीसमाधिराजे[5] सूत्रधारणपरिवर्त्तो नामैकादशः[6]] ॥११॥

1 B इमि वर चरमाण ; C इम वर
2 B नित्यु सौमनस्यः
3 C ०च्छिमाणमध्यां प
4 B धरेथ सूत्रराजम्
5 B drops इति श्रीसमाधिराजे
6 B सूत्रधारपरिवर्तो नामैकादशमः

## द्वादशपरिवर्तः

तत्र कुमार बोधिसत्त्वो[1] महासत्त्वः सर्वधर्माणां स्वभावं प्रजानाति[2] । तस्येमे[3] एवंरूपा [4]गुणानु[शंसा भवन्ति । स तथागतानां भूतं गुण]वर्णं भाषते । न च तथागतान् व्याख्याति असता अभूतेन[5] । तत् कस्य हेतोः । यया धर्मतया तथागतः प्रभा[व्यते[6] तां धर्मतां यथाभूतं[7] प्रजानाति । अ]-नन्तान् बुद्धगुणान् प्रजानाति[8] । तत् कस्य हेतोः । अनन्ता हि कुमार[9] बुद्धगुणा अचिन्त्याश्चिन्तापगतास्तेनाशक्यं[10] चिन्त[यितुं वा प्रमातुं वा[11] । तत् कस्य हेतोः] । चित्तं हि कुमार[12] निःस्वभावमरूप्यमनिदर्शनम्[13] । इति हि कुमार यत्स्वभावं चित्तं तत्स्वभावा बुद्धगुणा यत्स्व[भावा बुद्धगुणा]स्तत्-स्वभावास्तथागता[14]स्तत्स्वभावाः[15] सर्वधर्माः । यः[16] कुमार

1 A °र् यो बोधि° 2 A जानाति ; C °र्माणां स्वभावाचिन्तितां यथाभूतं प्रजा°

3 A & B तस्य मे 4 A एवंरूपगु°

5 B °भूतगुणवर्णं भावन्तेन च तथागतानभ्याख्याति असमता सद्भूतेन

6 B प्रभाषते

7 A तथाभूतं ; Tib. 70b, l. 6: ཆོས་ གང་གིས་ དེ་བཞིན་གཤེགས་པར་རབ་ཏུ་ དབྱེ་ བའི་ཆོས་ ཉིད་དེ་ ཡང་དག་པ etc.=येन धर्मेण तथागतः विशिष्यते ( प्रभिद्यते ) तां धर्मतां

8 B drops अनन्तान् बुद्धगुणान् प्रजानाति

9 C drops हि कुमार 10 B तेन शक्यं ; C °न्त्याश्च तापगतास्तेन शक्यं

11 B प्रमा वा 12 C चिन्तय कुमार

13 B निःस्वभावमनुष्यमनिद° ; C °मरूप्यनिद°

14 B चित्तं तत्स्वभावा बुद्धगुणाः । तत्स्वभावस्तथागतस्तत्°

15 C °स्तथागतस्वभावाः 16 B यथा

बोधिसत्त्वो महासत्त्व एवं सर्वगुणस्वभावनिर्देशं[1] यथाभू[तं प्रजानाति अयं कुमार[2] उच्यते बोधि]सत्त्वो महासत्त्वो निध्याप्तिमानसः। निःशरणकुशलः[3]। त्रैधातुकनिःशरणं[4] यथाभूतं प्रजानाति। यथावद[र्शी अवितथवादी अनन्यथाभा]षी[5] यथावादी तथाकारी अनभिनिविष्टस्त्रैधातुके[6] त्रैधातुकसमतिक्रान्तः। समतिक्रान्तः[7] कामभूमिं रूप[भूमिम् आरूप्यभूमिं क्लेशभूमिं ना]मभूमिं घोषभूमिम्[8]। अक्षरपदनयकुशलः[9]। अक्षरविभावितज्ञानः। अनभिलप्यधर्मकोविदः। अक्षरज्ञः। अक्ष[रकुशलः। अक्षरपदप्रभेदज्ञान]कुशलः। अक्षरपदप्रभेदविस्तारज्ञानकुशलः[10]। सर्वधर्मपदप्रभेदकुशलः[11]। सर्वधर्मपदप्रभेदविस्तारकुशलः[12]। सर्वधर्मव्यव[स्थानज्ञानकुशलः। निश्चितया बुद्ध्या] समन्वागतोऽनभिभूतः सर्वमारैः[13] पापीयोभिर्मारकायिकाभिश्च[14] देवताभिः। अस्मिन् खलु पुनर्धर्मपर्याये[15] [भाष्यमाणे अष्टानवतेर्नियुतानां] देवमानुषिकायाः प्रजायाः पूर्वपरिकर्मकृतायाः[16] कोटीशतसहस्रावर्तायाः[17] धारण्या अनावरणायाश्च[18] धर्मविपश्यना[याः[19] क्षान्तेः प्रतिलम्भोऽभूत्। ते च सर्वे भगव]ता

1 A स्वभावमेकान्तनि० ; B एवं सर्वधर्मा गुणाः स्वभावमेकार्थनि०
2 A अयं सुकुमार 3 B निस्सर० 4 B ०निःसरणः
5 B यथावद्देशी अवितथभाषी अनन्यभाषी 6 B drops स्त्रैधातुके
7 B drops समतिक्रान्तः 8 B रूपभूमिमारूप्यभूमिं क्लेशभूमिं वासभूमिं गोत्रभूमिं घोष०
9 A & B अक्षरधर्मनय० 10 C अक्षरविस्तारज्ञा० 11 A ०धर्मप्रभेदज्ञानकु० ; B drops अक्षरपदप्रभेदविस्तारज्ञानकुशलः। सर्वधर्मपदप्रभेदकुशलः 12 B & C omit पद ; A ०विस्तारज्ञानकु० ; B ०विज्ञानज्ञान० 13 A ०भिभूतो मारैः ; B ०नाभिभूतमारैः
14 B मानकायिका० 15 A खलु धर्म० 16 B पूर्वकर्मकृतायाः ; C पूर्वकर्मपरिकृतायाः 17 A & B सहस्रपरिवर्ताया 18 C ०रणाश्च 19 C धर्मविप्यन०

व्याकृता अष्टाचत्वारिंशता कल्पैरसंख्येयशतसहस्रैरनुत्तरां[1] सम्यक्संबोधिमभिसंभोत्स्यन्ते[2] । सर्वे चान्यान्यनामान[3] एका-[युष्प्रमाणा अन्यान्येषु बुद्धक्षेत्रेषु[4] अ]नुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते । तत्रेदमुच्यते

यो बोधिसत्त्व मतिमान्
प्राप्नोति अनुत्तरां वरां बोधिम्[5] ।
अर्थे च धर्मि कुशलो[6]
चरति स धर्म[स्वभावस्मि[7] ॥१॥
नाभूत भणति[8] वाचं ]
बुद्धानां यादृशा गुणविशेषाः ।
स हि धर्मु तं[9] जिनानां
जानति शूरो विगतकाङ्क्षः ॥२॥
एकार्थु[10] सर्वधर्मान्
प्रजानति च शून्य[तां स एकांशम्[11] ।
नानार्थु नास्ति तेषाम्
ए]कार्थे शिक्षितो भवति ॥३॥

1 B कल्पेनासंख्येयशतसहस्रैरनुत्तरां ; C कल्पसंख्येय॰ 2 C ॰संबोत्स्यन्ते ; C ॰भोत्स्यते 3 Tib. 71b, l. 5: ཐམས་ཅད་ཀྱང་མིང་ནི་ཐ་དད
4 Tib. 71b. l. 6: ཞིང་སོ་སོར 5 B या बोधिसत्त्वमभि मां प्रार्थेति अनुत्तरां नाम बोधिं ; C प्रार्थेति च उत्तमां वरां बो॰ 6 B अर्थेषु धर्मकुशलो
7 A चरति सर्व॰ ; B चरति स धर्मस्वभावस्तस्मिन् ; C चरति सर्वध॰
8 B भवति 9 B धर्मं तं ; C धर्मे तं 10 C एकार्थं
11 Tib. 72a, l. 1: མགོ་གཅིག་ཏུ །

निष्कल्पानविकल्पान्
अनोपलंभांश्च जानाति मतिमान्[1] ।
क्षयि अक्षयेऽस्य[2] संज्ञा
प्रहीण सर्वा [निरवशेषा ॥४॥
नहि रूपतो दशबलान्
प]श्यति सो धर्मकाय नरसिंहान् ।
नापि लक्षणेहि तस्य[3]
प्रहीण[4] सर्वे विपर्यासाः ॥५॥
धर्मा अचिन्तत्र एते[5]
चिन्तापगता स्वभाव [उपशान्तः[6] ।
एवं प्रजानमानः
पश्यति] बुद्धान् द्विपदश्रेष्ठान्[7] ॥६॥
यथ ज्ञात्वात्मसंज्ञा[8]-
स्तथैव सर्वत्र प्रेषिता बुद्धिः[9] ।
सर्वे च तत्स्वभावा[10]
धर्म विशुद्धा गगनकल्पाः[11] ॥७॥

1 B एकार्थं सर्वधर्माणां प्रजानाति च शून्यकान् । नानात्वं नास्ति तेषामेकार्थे शिक्षिते भवन्ति निष्कल्पाः । निष्कल्पाननोपलम्भाश्च जानती मतिमान् ।

2 A & C क्षयिक्षयेस्य 3 B नरसिंहं नोपलक्षणे हि तस्य

4 B प्रहीणाः ; C विप्रहीण 5 A धर्माऽचिन्तयेते ; B धर्म अचिन्त्य एते ; C ०न्त्या एते 6 B चिन्तापगत स्वभाव उपासन्ताः 7 C दारेन्ति पदान श्रेष्ठान्

8 B अथ ज्ञानं वा आत्म० ; C यथ आत्म०

9 C ०ता सिद्धिः 10 C सर्वे तत्स्व०

11 B ०भावा धर्मं विशुद्धागमसत्त्वाः

[न हि जात मानसेऽस्य[1]
निःसरणं ज्ञात्व[2] सर्वधर्माणाम्] ।
त्रैधातुके विमुक्ति-
प्रणिधानु न विद्यते तस्य[3] ॥८॥
यथावदर्शि भोति[4]
अवितथवचनोऽनन्यथाभाषी[5] ।
सर्वं च [तस्य वचनं
निश्चरति जिनानुभावेन ॥९॥
अति]क्रान्तु कामभूमिं
क्लिेशभूमिं[6] च रूप आरूप्यान्[7] ।
धर्मेष्वसक्तमनसः[8]
प्रमुदित चरते जगहिताय ॥१०॥
अतिक्रान्तु नामभू[मिं
घोषो ज्ञान स्वभावेन चयिकः[9] ।
याव]च्चिरंपि भणतो
न विद्यते निश्चयस्तस्य[10] ॥११॥

1 Tib. 72a, l. 6: ཡིད་ལ་ནམས་ཀྱང་འབྱུང་བ་མེད །

2 B सा तस्यो निशरणत्वात्तु 3 A विमुक्तः प्रणिधानु न विद्यते यस्य; B विभक्तिः प्रणिधानेन विद्यतेऽस्य; C ०ऽधिमुक्ति प्रणिधान न विद्यते तस्य

4 B यथा वद्दसि भोन्ती 5 C ०भाणी 6 C drops क्लिेशभूमिं

7 A च रूप आरूप्याः 8 A सर्वेष्वशक्युमनसो

9 A वशिकः; Tib. 72b, l. 2: གཞོག་དུ་གྱུར་པ །

10 In B about two to three leaves are wanting here though the leaf-numbering is continuous. Vs. 11 ff. appear in A, C, and Tib.

संज्ञाप्रचारु नास्ति
दृष्टिविपर्यासु सर्वशः[1] क्षीणः ।
सुनिश्चिता[2] [बुद्धिश्च
ते गगनोपमधीराः] ॥१२॥
विहारकोटी नियुता[3]
भवेयु विक्षेपणार्थचित्तस्य ।
अभिभवति सर्वमारान्
न चापि तेषां वशमुपैति ॥१३॥
सर्वि ज[ह्यु मारजालं
परिशुद्धः शील]वानपरिदाहः[4] ।
ध्यानसुखस्मि[5] निरतः
प्रजानति च शून्यकं[6] लोकम् ॥१४॥
लोकाश्च स्कन्ध उक्ता-
स्तांश्चापि स शून्यकान् प्रजानति ।
[अनुत्पादाननिरोधान्
सर्वान्] गगनोपमान् धर्मान् ॥१५॥
आत्मानं स त्यजते[7]
न चैव शिक्षां श्रुतां दशबलस्य ।

1 A सर्वं सर्वतः 2 C अनिश्चितास्य 3 A सविमारकोटी नयुता
4 C ०दाराए ; Tib. 72b, l. 5: གདུང་བ་མེད
5 C ०मुखस्मि 6 C शून्यतां 7 A सत्यजाने

सो शीलुपारमिं गत
उपपद्यति यत्र प्रणिधेति[1] ॥१६॥
[विचरन्तु बुद्धक्षेत्रान्
पश्यति] बुद्धकोटी नियुतानि ।
न स्वर्ग प्रार्थयते
न चापि प्रणिधानतो[2] मुक्तः ॥१७॥
न भ्रंशयति[3] स वीर्यं[4]
मुहूर्तमात्रमपि[5] धर्म [चरमाणः ।
प्रशंसितश्च भोति]
बुद्धेभिर्दशदिशो[6] लोके ॥१८॥
तस्मात्तर्हि कुमार
श्रुत्वा धर्मानिमान् समाधिस्मिन् ।
जहियान ज्ञातलाभं
प्रकाशय[7] महाजने [धर्मम् ॥१९॥
य इच्छति स्वयंभू-
र्भवेय] बुद्धो महागुणसमङ्गी ।
इह शिक्षित्वा कुशलो
दशबलधारी भवति बुद्धः ॥२०॥

[ इति श्रीसमाधिराजे समाध्यनुशिक्षणापरिवर्तो नाम
द्वादशः[8] ] ॥१२॥

1 C प्रणिदधेति 2 C स्वर्गान् प्रार्थयते यथा प्रणि० 3 C स्रंसयति
4 A स्ववीर्यं 5 C अमूर्त० 6 A बुद्धेहि दशदिशे
7 A प्रकाशये 8 A द्वादशमः

# त्रयोदशपरिवर्तः

तत्र खलु भगवान् पुनरेव चन्द्रप्रभं[1] [कुमारभूतमामन्त्रयते स्म ]। तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनानुत्तरां सम्यक्-संबोधिमभिसंबोद्धुकामेन समाधिनिर्देशकुशलेन[2] भवितव्यम्। तत्र कुमार कतमः समाधिनिर्देशः। या [यथावतता सर्वधर्माणां] समता [अविषमता]। अकल्पना अविकल्पना। अविठपना असमुत्थापना। अनुत्पादः अनिरोधः[3]। कल्पविकल्पपरिकल्पसमुच्छेदः। चित्तानालंम्बनता। अमनसिकारः[4]। प्रज्ञप्तिसमुच्छेदः[5]। वितर्कविकल्पसमुच्छेदः[6]। रागद्वेषमोहसमुच्छेदः[7]। [नान्तानन्तमनसिकारः]। मनसिकारसमुच्छेदः[8]। स्कन्धधात्वायतनस्वभावज्ञानम्। स्मृतिमतिगतिह्रीधृतिचारित्राचारगोचरप्रति[पत्तिस्थानम्]। अरणाभूमिः। शान्तभूमिः[9]। सर्वप्रपंचसमुच्छेदः। सर्वबोधिसत्त्वशिक्षा। सर्वतथागत[गोचरः। सर्वगुणपरिनिष्पत्तिः। अय]मुच्यते[10] कुमार समाधिनिर्देशः। यत्र समाधिनिर्देशे प्रतिष्ठितो बोधिसत्त्वो महासत्त्वोऽविरहितो भवति स[माधिना अभ्रान्तचित्तश्च भवति महा]करुणासमन्वागतोऽप्रमेयाणां च सत्त्वानामर्थं करोति।

1 A भगवांश्चन्द्र०   2 C ०सत्त्वेन महासत्त्वेन समाधिकुशलेन

3 A समता अकल्पनता अविलोपना असमुत्थापना अनुत्पादः अनि० ; C प्रतिरोधता

4 C चित्तारम्भणस्याममनसिकारः   5 C विज्ञप्ति०

6 A & Tib. drop वितर्कविकल्पसमुच्छेदः

7 A ०दोष०   8 A ०कारासमु०   9 A drops अरणाभूमिः शान्तभूमिः

10 C विद्यते

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा [अभाषत[1] ।

समाध्यविषमा भूमिः] शान्ता सूक्ष्मा सुदुर्दृशा ।
सर्वसंज्ञासमुद्घातः समाधिस्तेन चोच्यते[2] ॥१॥
अकल्पश्चाविकल्पश्चाग्राह्यत्वमनिद[र्शनम्[3] ।
अनुपलब्धिश्चित्तस्य समा]धिस्तेन चोच्यते ॥२॥
समाहितो यदा भोति सर्वधर्मा न मन्यते ।
अमन्यना यथाभूतं समाधिरिति शब्दितः ॥३॥
[ न धर्मेऽस्ति रजोमात्र रजश्चापि न] विद्यते ।
अनुपलब्धिधर्माणां समाधिस्तेन चोच्यते[4] ॥४॥
चित्तस्यानुपलब्धिश्च विकल्पो ह्येष चोच्यते[5] ।
अविकल्पित ते[6] धर्माः समा[धिरेष जानथ ॥५॥
शब्देन सूचितो ह्यथः] स च शब्दो अवस्तुकः ।
प्रतिश्रुत्कोपमः शब्दो अन्तरीक्षं यथा नभः ॥६॥
अस्थिता हि इमे धर्माः स्थितिरेषां न विद्यते[7] ।
[अस्थितिः स्थितिशब्देन स्व]भावेन न लभ्यते[8] ॥७॥

1 A ०मिमां गाथामभाषत 2 C स्तेनोच्यते 3 A अकल्पना विकल्पश्चा०

4 A drops here stanzas 3 & 4. The first line of stanza 4 is our reconstruction from Tibetan.

Tib. 74a, l. 2: ཆོས་ནི་རྡུལ་ཙམ་ཡོད་མེད་དེ། །
རྡུལ་ཅེས་བྱ་བའང་ཡོད་མ་ཡིན། །

5 C विकल्पो हि स चोच्यते 6 A अविकल्पिताश्च ते

7 C स्थितिश्चैषां न लभ्यते 8 C विनन लभ्यते

च्यवते अगतीत्येवं गतिश्चासौ न विद्यते ।
अगतिर्गतिशब्देन समाधिर्नदितस्तथा[1] ॥८॥

असमाहितो [वुच्यति एष मन्यना
समाहि]तो एष द्वितीय मन्यना ।
अमन्यमाना[2] विचरन्ति बोधये
अमन्यमाना स्पृशि[3] बोधिमुत्तमाम् ॥९॥

सम विषम[4] एष शा[न्तभूमिः[5]
समथ विपश्यना]निमित्त एषा ।
सेविय इमु शान्त बुद्धबोधिं[6]
स इह प्रयुक्तु समाधिभावनायाम् ॥१०॥

न च पुनरियमक्षरेहि[7] शक्यं
प्र[विशितु अर्थगति[8] प्रवेशो] ।
सर्व रुत[9] जहित्व भाष्यघोषं[10]
भवति समाहित नो च मन्यनास्य ॥११॥

यश्च इह समाधि बोधिसत्त्वो
यथ उपदिष्टु [तथा स्थिहेत युक्तः ।

1 C समाधिगतितः स्मृतः
2 C अमन्यना
3 C स्पृशति
4 A सम अविषम ; C समल वि०
5 Tib. 74a, l. 7 : སངས་ རྒྱས་ས=बुद्धभूमिं
6 C ०गोत्रं
7 C न च पुनर्नियमक्षरेहि
8 Tib. 74b, l. 1 : དོན་གྱི་ རྣམ་པར་ རིག་པ་འཇུག་པ་ལ །
9 Tib. drops रुत
10 C ०योगं

सचेदिह भ]वि कल्पदाहु[1] क्षेत्रे
गिरिवरमध्यगतं न तं दहेऽग्निः ॥१२॥
यथ गगनु न जातु दग्ध पूर्वं
सुबहु[2] कल्पशतेहि द[ह्यमानम् ।
गगनसमा अधिजानमान] धर्मा-
स्ते न जातु दह्यति सोऽग्निमध्ये[3] ॥१३॥
स चि पुन ज्वलमान[4] बुद्धक्षेत्रे
प्रणिधि करोति समाधिये स्थिहित्वा ।
ज्वलनु अ[यु प्रशाम्यतामशेषं
पृथिवी विनश्यि न] चास्य अन्यथात्वम्[5] ॥१४॥
ऋद्धि बलु अनन्तु तस्य भोति
खगपथि गच्छति सो असज्जमानः ।
इमि[6] गुण अनु[भोति बोधिसत्त्वो
यथ अनुशिष्टु समाधि]ये स्थिहित्वा ॥१५॥
जायते च्यवते वापि न च [7]जाति न च्युतिः ।
यस्य[8] विजानना एषा समाध्यस्य न दुर्लभा ॥१६॥
[न च्युतिर्नापि चो जाति लोकनाथेन देशिता] ।
लोकनाथं विदित्वैवं समाधिं तेन जानथ[9] ॥१७॥
अनोपलिप्ता लोकेन लोकधर्मै [न सज्जति ।
असज्जमानः [कायेन बुद्धक्षेत्राणि गच्छति ॥१८॥

1 A दाञ्च 2 C बहुनपि 3 C स्तेन नह्यति जातु सो०
4 A स विपुल कलमानि 5 C चासि यान्यथात्वम्
6 C इम 7 A चापि न चापि 8 A अस्या 9 C जानति

क्षेत्रेषु] पश्यते नित्यं संबुद्धान् लोकनायकान् ।
धर्मञ्च शृणुते तत्र बुद्धक्षेत्रेषु[1] भाषितम् ॥१९॥
न जातु तस्य अज्ञानं[2] [धर्मधातुञ्च भाषते ।
गतिज्ञः] सततो धर्मे धर्मधातुमयो हि सः ॥२०॥
भाषतः कल्पकोट्योऽपि[3] प्रतिभानं न हीयते[4] ।
निर्मिणोति बहूनन्यान्[5] [बोधिसत्त्वान् विचक्षणः ॥२१॥
क्षेत्रातः क्षेत्र] गच्छन्ति बोधिसत्त्वान निर्मिताः ।
सहस्रपत्रपद्मेषु पर्यङ्केन निषण्णकाः ॥२२॥
बुद्धबोधिं प्रकाशेन्ति[6] धारणी-[सूत्रशोभनम् ।
अन्याश्च सूत्र]कोटीयो समाधिं शान्त भावयन्[7] ॥२३॥
अविवर्तिकपथे स्थापेन्ति[8] बहून् सत्त्वानचिन्तियान् ।
प्रतिभान क्षयं नै[ति[9] बुद्ध]बोधिं प्र[काशिय ॥२४॥
कूटागारे हि] गच्छन्ति रतनेहि विचित्रिते[10] ।
ओकिरन्ति च पुष्पेहि गन्धवद्भिर्विनायकम्[11] ॥२५॥
ओकिरन्ति च चूर्णेहि गन्धवन्तेहि नायकम्[12] ।
[कुर्वन्ति विपुलां पूजां सर्वे ते] बोधिकारणात् ॥२६॥
अप्रमेया गुणा एते बोधिसत्त्वान तायिनाम्[13] ।
निष्क्लेशा यदा भोन्ति तदा ऋद्धिं लभन्ति [ते ॥२७॥

1 C बुद्धैः क्षे०  2 C न तस्य चित्त अज्ञान  3 C ०ट्यो हि
4 C क्षयते  5 C बहुनन्न्य  6 C प्रकान्तेन्ति
7 C भावियः  8 C अविवर्तिकत्वे स्थाप्येन्ति
9 A प्रतिभानक्षपतेति  10 C ०त्रितैः
11 A drops this line  12 C गन्धवद्भिर्विनायकम्  13 C भाषिणाम्

अनुपत्तिकिलेशान अ]च्छाः शुद्धाः प्रभास्वराः ।
असंस्कृता अकोप्याश्च बोधिसत्त्वान गोचराः ॥२८॥
प्रशान्ता उपशान्ताश्च निष्किलेशा अनङ्गनाः ।
अप्र[पञ्चा निष्प्रपञ्चाः प्रपञ्चसम]तिक्रमाः ॥२९॥
अप्रचारोऽक्षराणाञ्च सर्वधर्माण लक्षणम् ।
दुर्विज्ञेयश्च घोषेण समाधिस्तेन चोच्यते ॥३०॥
अक्षया उप[शान्ता च अनाभोगा अदर्शना] ।
गोचरः सर्वबुद्धानां भूतकोटिरनाविला ॥३१॥
सर्वबुद्धानियं[1] शिक्षा सर्वधर्मस्वभावता ।
इह शिक्षित्व संबुद्धा [गुणानां पारमिं गताः ॥३२॥
न सम्पारं] न वापारं[2] पूर्वान्तो न विकल्पितः ।
तेन ते सर्व संबुद्धा गुणानां पारमिं गताः ॥३३॥
अनागतान[गतिकान् धर्मान् ज्ञात्वा स्वभावतः] ।
निष्प्रपञ्चाननाभोगांस्तत्र ते पारमिं गताः ॥३४॥

[इति श्रीसमाधिराजे समाधिनिर्देशपरिवर्तस्त्रयोदशः] ॥१३॥

1 C सर्वबुद्धानां नियं
2 C व पारं वा ; Tib. 75b, l. 7 : ཚུ་རོལ་དང་ནི་ ཕ་རོལ་མེད །

# चतुर्दशपरिवर्तः

अथ खलु भगवांश्चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासंगं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। आश्चर्यं भगवन् यावत् सुभाषितेयं[1] भगवता तथागतेनार्हता सम्यक्संबुद्धेन सर्वधर्मस्वभावसमता सर्वबोधिसत्त्वशिक्षा[2] [समाधिनिर्देशः। यथापि नाम भगवन्] दीर्घरात्रमत्र शिक्षित्वा[3] समुदागतोऽनुत्तरायां सम्यक्संबोधौ। प्रतिभाति च मे भगवन् प्रतिभाति च मे सुगत[4]। भगवानाह। प्रतिभातु ते कुमार यस्येदानीं कालं मन्यसे। अथ खलु चन्द्रप्रभः कुमारभूतो [भगवता कृतावकाशो] भगवन्तं [सम्मुखं सारूप्याभिर्गाथाभिरभ्यष्टावीत्]।

दृष्टान सत्त्वान् दुःखितानुपद्रुतान्
रागेण दोषेण सदाभिभूतान्।
चित्तं त्वयोत्पादितु बोधिकारणाद्
बुद्धो भवेयं ति [प्रजान मोचकः[5] ॥१॥
चीर्णोऽसि वीर्ये] बहुकल्पकोटियो
दाने दमे संयमि नित्यु शिक्षितः[6]।

1 C अथ खलु चन्द्रप्रभः कुमारभूतो भगवन्त...भाषिता चेयं

2 C ०स्वभावता स च बोधिसत्त्वशिक्षा  3 C ०रात्रमत्र शिक्षाया शिक्षयित्वा

4 C ०संबोधौ...ते भात न मे भग...

5 Tib. 75b, l. 1-2 : སྐྱེ་དགུ་ཐར་བྱེད་སངས་རྒྱས་གྱུར་ཅིག་ཅེས།

6 C नित्युपस्थितः

शीले च क्षान्तौ तथ वीर्येऽतन्द्रितो[1]
दानं च दत्तं विपुलमनन्तकम् ॥२॥
न चो [तव मानसु जातु खिन्नं
हस्तांश्च] पादांस्त्यजमानु जीवितम् ।
हिरण्य सुवर्णं तथ पुत्रदारं
राज्यं च त्यक्तमनपेक्ष भूत्वा[2] ॥३॥
शीलं तवाच्छं[3] विमलं[4] [विशुद्धम्
आत्मा च त्यक्तो न च शील] खण्डितम्[5] ।
कायेन वाचा मनसा सुसंवृतः
सुदान्तचित्तु सुगता[6] नमोऽस्तु ते ॥४॥
क्षान्तीरताः क्षान्तिपथे प्रतिष्ठिताः[7]
[काये कृते खण्डपि नैव क्रुध्यसे] ।
क्षीरं ततः प्रस्रवि मैत्रभावना
आश्चर्यभूता[8] सुगता नमोऽस्तु ते ॥५॥
बलैरुपेता दशभिबलैः स्थिता
असङ्गज्ञानी वि[दि[9] सर्वधर्मान् ।
करु]णानि लोकहितकर धर्मस्वामिन्
अनुकम्पसे प्रजा इमु अर्थकामः[10] ॥६॥

1 C वीर्यतन्द्रितो 2 C अनपेक्षि श्रुत्वा 3 A सदाच्छं
4 C विपुलं 5 C खण्डिता 6 C ०संवृता सुदान्तचिन्ता सुगता
7 C क्षान्तीबल क्षान्तिबले प्रतिष्ठिता
8 A प्रसवित मैत्रमना ; C क्षीरं भवा प्रस्रवि मैत्रभावना नाश्चर्यधर्मी
9 A विवित्त्वसि ; Tib. 76b, l. 7 : ཆོས་ཀུན་རྟོགས། ।
10 C ०न्नतु कम्पसे पूज इममर्थकामः

शून्यं ति ज्ञानं न च पुनिहास्ति[1] सत्त्वो
लोकं च दृष्ट्व[2] तथा[ति प्रनष्टमार्गम् ।
विबोधितास्ते प्रकृ]तिनिरात्म[धर्मे
विमुक्तिजाता[3] न च क्वचि सा विमुक्तिः ॥७॥
प्रत्या[दिशं[4]] जहिय[5] सदा प्रमत्तं
जित्वा च मारं[6] सबलमनन्तसैन्यम् ।
[बुद्धित्व बोधि विपुलामनन्तज्ञानं
दिशे]हि[7] धर्मं परम विशुद्धशान्तम् ॥८॥
गगनं पतेय्या सह शशितारकेहि[8]
पृथिवी विनश्येत सनगरशैलसंस्था[9] ।
आका[शधातुरपि च सियान्यथात्वं
नो चैव] तुभ्यं वितथ भणेय्य[10] वाचा ॥९॥
दृष्ट्वा त्वं दुःखितान् सत्त्वानुपलम्भरताः प्रजाः[11] ।
अनोपलम्भं देशेसि गम्भीरां शान्तशून्यताम् ॥१०॥
[शिक्षितोऽसि महावीर कल्पकोटीर]चिन्तिया ।
अनोपलम्भशिक्षायां स्खलितं ते न विद्यते ॥११॥
यादृशे शिक्षितो धर्मे तादृशं धर्मु भाषसे ।
अभूमि[रत्र बालानां यावन्त अन्यतीर्थिकाः] ॥१२॥

1 A पुनक्कास्ति 2 A drops दृष्ट्व तथा 3 C ०तिं
4 Tib. 77a, l. 2 : སོ་སོར་ བརྟགས་ཏེ । 5 C तेहिय
6 C ज्ञात्वा उदारं 7 C ०सि 8 C सतेया सह इह तारकेहि
9 C सर्वाः 10 C भवेय 11 A ०रतान् सदा ; C सर्वानुपलम्भे रता प्र०

ये स्थिता आत्मसंज्ञायां ते स्खलन्ति अविद्वसु ।
ज्ञात्वा[1] धर्माण नैरात्म्यं[2] स्खलितं ते न विद्यते ॥१३॥
भूतवादी महावीर भूतध[र्मप्रतिष्ठितः ।
भूते सत्ये स्थितो नाथ भूतां] वाचं प्रभाषसे ॥१४॥
भूता ते[3] चारिका आसीद् यथा ते प्रणिधिः कृतः[4] ।
तस्य भूतस्य निष्यन्दा भूतां वाचं प्रभाषसे ॥१५॥
भू[तचर्यासु संपन्नो भूतकोटी सुशिक्षिता] ।
भूताशया भूतचरी[5] भूतप्रज्ञ नमोऽस्तु ते ॥१६॥
समस्ते प्रज्ञया नास्ति ज्ञानवादि प्रभाकर ।
ज्ञाने विशेष[तां प्राप्त ज्ञानवादि नमोऽस्तु ते ॥१७॥
मित्रस्त्वं] सर्वसत्त्वानां मैत्री तव सुभाविता ।
अप्रकम्प्यो यथा मेरुरचलः सुप्रतिष्ठितः ॥१८॥
गणे सुविपुले शास्तुर्ग[[6]णान् संपरिकर्षसि[7] ।
गभीरप्रज्ञा सुग]ता नदसे परिषद्गताः ॥१९॥
सिंहनादं नदि बुद्धः सिंहविक्रान्तविक्रमः ।
जितास्ते तीर्थिकाः सर्वे सिंहेन क्रोष्टुका यथा ॥२०॥
[अदान्तदमको वीर अदान्ता दमि]तास्त्वया ।
ते च मित्रा दृढा भोन्ति अभेद्या भोन्ति सुस्थिताः ॥२१॥

1 C श्रुत्वा 2 C धर्मा निरात्मान 3 A भूताथ
4 C प्रणिधिकृता 5 C ०परिं 6 A गगने विपुले शास्तु०
7 A & Tib. 77b, ll. 4-5 :

སྟོན་པའི་འཁོར་ཚོགས་རྒྱ་ཆེ་ཡང་།
ཚོགས་མང་དག་ཀྱང་སྡུད་པར་མཛད། །

दृष्ट्वा त्वं दुःखितान् सत्त्वानात्मदृष्टिसमाश्रितान्[1] ।
नैरात्म्य धर्मं[2] [देशेसि यत्र नास्ति प्रियाप्रियम्] ॥२२॥
अशिक्षितानां बालानां कुमार्गपथचारिणाम् ।
मार्गं त्वं संप्रकाशेसि येन गच्छन्ति नायकाः ॥२३॥
ये स्थिता आत्म[संज्ञायां दुःखे ते सुप्रति]ष्ठिताः ।
न ते जानन्ति नैरात्म्यं यत्र दुःखं न विद्यते ॥२४॥

अस्खलिते पदे धर्मे[3] देशकोऽसि
स्खलितु न लभ्यति लोकनाथः ।
[अवितथ गिर संप्रभाषसे त्वं]
दुःखमोक्षकरा नमस्ते नाथ ॥२५॥
बहुनियुतशता सहस्रकोट्यो
गगनस्थिताः पृथु देवनागयक्षाः ।
सर्वि स्पृह [जनेन्ति नायकस्मिन्
भगवतु वाच श्रु]णित्व अर्थयुक्ताम् ॥२६॥
स्निग्धमृदुमनोज्ञकालयुक्तां[4]
सुमधुर वाच प्रणीत प्रेमणीयाम् ।
अपरिमित[5][स्वरांगसंप्रयुक्तां
हितकर मोक्ष]करीं बहुजनस्य ॥२७॥

1 C सर्वानात्म०
2 C निरात्मं धर्मेषु
3 C अखिलितपदधर्मे०
4 C ०कायमु०
5 C अपरिमि

तुरियशतसहस्र अप्रमेया
सुमधुरयुक्त भवेयुरेककाले[1] ।
दिव्यस्वर विशिष्ट प्रेमणी[या
अभिभवति सुगतस्य ए]कवाचा ॥२८॥
द्विजगणकलविङ्क[2]मञ्जुघोषाः
सुरुचिरप्रेमणीयाः सुगीतशब्दाः ।
शङ्खपटहभेरिवीणशब्दाः[3]
कलमपि न[4] लभन्ति बुद्धशब्दे[5] ॥२९॥
परभृ[तशुकशारिकाण शब्दा-
स्तथ पुनः] क्रौञ्चमयूरकिन्नराणाम् ।
रुत रवित य[6] केचि प्रेमणीयाः
कलमपि बुद्धस्वरस्य नानुभोन्ति ॥३०॥
प्रिय मधुर मनो[ज्ञ प्रेमणीयाः
सुमधुर शान्तगिरा] प्रशंसनीयाः ।
सर्वि गिर प्रयुक्त एककाले
गिर वर हर्षणियास्तथागतस्य ॥३१॥
सुरमनुजनरेन्द्रदानवानां[7]
स[कल भवे विभवे य अस्ति सत्त्वाः[8] ।

1 A भणेयुरे०  2 Tib. 78a, l. 7: ཁུ་བྱུག : कोकिलः

3 C अचिरप्रेमणियाः स्वरा कुणालाः । सर्वद्विजगण करोन्ति शब्दं कलमपि बुद्धः......शब्द प्रेमणीया । सुमधुर वादित गीततूर्यशब्दाः शङ्खपटहभेरिवेण०

4 A ०मपि ते न  5 C कलमपि नानुभोन्ति बुद्धशब्दैः

6 A ०तरविजय०  7 C ०मानवानां

8 Tib. 78b. l. 4: སྲིད་གསུམ་ སེམས་ ཅན་མཐའ་དག་ ཅི་ཡོད་པ །

या] प्रभा अभवत् प्रभाकराणाम्

अभिभवति सुगतस्य एकरश्मिः ॥३२॥

कुसुमितु सुगतस्य आत्मभावः[1]

परिवृतु विचित्रु[2] सर्वलक्षणैः ।

[पुण्यशतनिर्वृतु[3] अच्छ शुद्धः

प्रतपति] सर्वजगे जिनस्य कायः[4] ॥३३॥

शंखान शब्द पणवसुघोषकाणां

भेरीण शब्द तथपि च किम्पलानाम्[5] ।

सर्वे च[6] श[ब्द सुमधुर प्रेमणीया

बुद्धस्य शब्द श]तिम कलां[7] न भोन्ति ॥३४॥

तूर्याण कोटिनियुतसहस्रशब्दा

आस्वादनीय सुमधुर दिव्यकल्पाः ।

प्रामोदनीय मरु[गण अप्सराणां

बुद्धस्य शब्दे शतिम क]लां न भोन्ति[8] ॥३५॥

क्रौञ्चा[9] मयूरपरभृतचक्रवाका

हंसाः कुणाला बहुविध पक्षिसंघाः ।

ये ते सशब्दाः सुमधुर एक[काले

बुद्धस्य शब्दे शतिम कलां] न भोन्ति ॥३६॥

1 A ०भाषः  2 C चित्रितु

3 Tib. 78b.1.6: བསོད་ནམས་བརྒྱས་གྲུབ་དག་ཅིང་རྣམ་པར་དང །

4 C काशः  5 A किष्यलानाम् ; C तथ मणि कि०

6 A सर्वति  7 C ति अकलां  8 C लक्षणान्न भोन्ति

9 C क्रोष्टा

नागान यक्षाण असुरमहोरगाणां
देवेन्द्रब्रह्ममरुपतीनां[1] च शब्दाः[2] ।
यावन्त शब्दास्त्रिभवे मनोज्ञ[3] कान्ता
[बुद्धस्वरस्य कलमपि ते न भो]न्ति ॥३७॥
या ब्रह्मणो वा मरुपतीनाञ्च[4] आभा
प्रभास्वराणां[5] मणिरतनान आभाः ।
सर्वाय आभा विविधमनेक[6][रूपाः
सर्वास्त एका अभि]भवि बुद्धरश्मिः[7] ॥३८॥
कायेन शुद्धो वचसा मनेन चैव
ज्ञानेन शुद्धस्त्रिभवि अनोपलिप्तः ।
गुणसारराशि[8] गुणरतनो नरेन्द्रः
स[र्वगुणेहि असमसमः] स्वयम्भूः ॥३९॥
एवं स्तवित्वा दशबल सत्यवादिं[9]
वाचं प्रभाषि मुदितमनः[10] कुमारः ।
पूजित्व बुद्धमतुलियमप्रमेयं
[बुद्धो भवेय यथ इव शाक्य]सिंहः[11] ॥४०॥

1 A ०शब्दमरु०  2 C शब्दान  3 C शब्दास्ति भवि मनोज्य
4 C ०पतिनश्च  5 C ०कराणां  6 C विविध अ०
7 Tib. 79a. l. 4:
ཀུན་གྱི་འོད་ནི་རྣམ་པ་དུ་མ་དག །
འོད་ཀུན་རྒྱལ་བའི་འོད་ཀྱིས་ཟིལ་གྱིས་ནོན ॥
8 A गुणसागररा०  9 C सत्यवादी  10 A मुदित
11 Tib. 79a, l. 6: ཤཱཀྱ་ཐུབ་བཞིན་བདག་ཀྱང་སངས་རྒྱས་གྱུར་ཅིག་སླ །

तस्यो विदित्वा सुगतु विशिष्ट[1]चर्या-
मसंगज्ञानी स्मितमकरोन्नरेन्द्रः ।
मैत्रेयु पृच्छी दशबलज्येष्ठपुत्रं
[कस्यार्थी एतं स्मितु कृतु नाय]केन ॥४१॥
आकम्पिताभूद्वसुमति[2] षड्विकारं
देवाश्च नाग गगनस्थिता उदग्राः ।
प्रेक्षन्ति बुद्धं प्रमुदित हृष्टचित्ता-
स्तं व्याकरोहि [सुगत अनाभिभूतः ॥४२॥
अभूमि]रस्मि भगवतु[3] श्रावकाणां
यत्र प्रवृत्तं पुरुषवरस्य ज्ञानम् ।
सुविशुद्धज्ञानिन्ननुपमप्रज्ञभूमि[4]
अखिला[5]ते स्मितु कृतु[6][जिन कस्य अर्थे ॥४३॥
पृच्छमि दशबलं] विनायकं
शाक्यसिंह द्विपदानमुत्तमम् ।
ज्ञानपारमिं गतं प्रभाकरं
रागद्वेष[7]-खिलमोह-सादकम् ॥४४॥
कल्पकोटि चरितो[ऽसि नायको
गङ्गवालुकसमा]स्ततोत्तरम्[8] ।

1 C ०तुमनन्त० 2 A ०ता बुद्ध सुमतिं 3 C भवतु

4 A ०ज्ञानं निरुपम बुद्धिब्रूहि 5 Tib. 79b, 1.3: མ་ལུས་གསུངས །

6 A अखिलाकृतं तस्मित कृ० ; C अखिलकृतं ते स्मितु

7 C ०दोष० 8 A स्ततोभूरिं

एषमाणु[1] वरबोधिमुत्तमां[2]
कस्य अर्थि स्मितु एतु दर्शितम् ॥४५॥
हस्त-पाद परित्यक्तु[3] शास्तुना
पु[त्रदारप्रियज्ञाति बान्धवान् ।
एष]माणु वरज्ञानमुत्तमं
को नु[4] हेतु स्मितु दर्शने मुने ॥४६॥
अश्वहस्तिरथपत्तियो त्वया
दासदासिमणिमुक्तिरूप्यकम्[5] ।
नैव द्रव्य[रतनञ्च लभ्यते
यन्न त्यक्तु चरतातिचारि]काम्[6] ॥४७॥
ज्ञानु श्रेष्ठु त्रिभवेऽतिवर्त्तते
सर्वसत्त्वचरियां प्रजानसे ।
धातुचित्तु अधिमुक्ति कोविदा
कस्य अर्थि स्मितु[7] ए[तु दर्शितम् ॥४८॥
केन पूजित नराणमुत्तमाः]
कस्य वार्थ[8] विपुलो भविष्यति ।

1 C एष बहु
2 A नोत्तमां
3 C परिकृत्त
4 C लोक
5 C ०रत्नरू०
6 C ०कान् ; Tib. 79b-80a. l. 1:
སྤྱོད་པ་མཆོག་ སྤྱོད་ཚེ་ནི་ཁྱོད་ ཀྱིས་མ་གཏང་བ། 
རིན་པོ་ཆེ་དང་ ནོར་རྫས་དག་ནི་གང་ ཡང་མེད། ॥
7 C स्मितमे
8 A अर्थु

को च अस्य चरियाय ग्राहकः
कस्य अर्थि स्मितु दर्शितं[1] मुने ॥४९॥
षड्विकार पृथिवी प्र[कम्पिता
पद्मकोट्य धरणीतु उत्थिताः ।
कोटिपत्रपरमा प्रभास्वरा]
हेमवर्णरुचिरा मनोरमाः ॥५०॥
यत्रिमे[2] स्थित जिनस्य औरसा
बोधिसत्त्व प[रमा मह]र्धि[काः ।
धर्मभाणक बहु समागता-
स्ते]ष कारुणिक पृच्छि[3] नायकम् ॥५१॥
भेरिशङ्खतुणवाः सुघोषका-
स्तूर्यकोटिनियुताः प्रवादिताः ।
तेष शब्द गगनस्मि श्रू[यते[4]
यादृशः सुगतघोष अचिन्तियः] ॥५२॥
हंसक्रौञ्चकलविङ्ककोकिलाः[5]
पक्षिसङ्घबहुकाः समागताः ।
मुञ्चि घोष परमं प्रभास्वरं
बुद्धघोषकल नानुभोन्ति[6] [ते ॥५३॥
केन दान दम संयमः पुरे]
कल्पकोटि बहुका निषेविताः[7] ।

1 C चार्थि स्मितु दर्शनं 2 C यथ मे 3 C स कारणि पृच्छ
4 C गगने हि श्रू० 5 C हंसकोक० 6 C ०घोषिकलनादु०
7 A ०कोट्यबहुका निषेविकाः

केन पूजित नराण उत्तमा
कस्य अर्थि स्मितु एतु[1] दर्शितम् ॥५४॥
केन पूर्वि द्विपदेन्द्रु पृच्छितो[2]
[गौरवं परमु संजनित्वन] ।
बुद्धबोधि कथमेष[3] लभ्यते
कस्य अर्थि स्मितु एतु[4] दर्शितम् ॥५५॥
यात्तिका[5] दशबला अतीतकाः
प्रत्युत्पन्न सुगता अनागताः ।
[सर्व जानसि नराणमुत्तमो]
तेन पृच्छमि[6] प्रजाय कारणात्[7] ॥५६॥
चित्तसन्तति प्रजाय जानसे[8]
सर्वि प्राणिन अनन्त गोचराः ।
यस्य यादृशु नरस्य आशय-
स्तेन] पृच्छमि नराणमुत्तमम् ]॥५७॥
ये चरन्ति चरियाणमुत्तमां[9]
हेतुयुक्ति विनयस्मि कोविदाः ।
बुद्धज्ञान कथमे[तु लभ्य]ते
[ए]तदर्थि द्विपदेन्द्रु पृच्छिहम्[10] ॥५८॥

1 C स्मितमेतु
2 C केन द्विपदे पृच्छता
3 A कथमेक
4 C स्मितमेतु
5 A यातुका
6 C पृच्छति
7 C कारणाम्
8 C चित्तसंगतिप्रजाय जा०
9 C चरियामनुत्तमां
10 C स्पृच्छिमान्

ये [हि धर्म सुखुमाः सुदुर्दृशाः
    शून्य] शान्त अतुला अचिन्तियाः ।
भाविता दशबलान गोचरा-
    स्तेष अर्थ अहु[1] पृच्छि नायकम्[2] ॥५९॥
येष मैत्रि करुणा सुभाविता
    सर्व [प्राणिषु जगे अचिन्तिया ।
सत्त्व] संज्ञ न च येष[3] वर्त्तते
    तेष अर्थि द्विपदेन्द्रु पृच्छियाम्[4] ॥६०॥
येष ज्ञानमतुलमचिन्तियं
    तेष ग्राह्य न कदाचि विद्यते[5] ।
चित्तगो[चरिय पारमिं गता
    तेष] अर्थि अहु[6] नाथ पृच्छमि ॥६१॥
शीलज्ञान गुणपारमिं गता
    त्र्यध्वज्ञानमतुलं भिवर्तते ।
नैव तुभ्य स्खलितूपलभ्यते[7]
    कस्य अर्थि [स्मितु एतु दर्शितम् ॥६२॥
शारिपुत्र अ]निरुद्ध कोलिता[8]
    ये च अन्य सुगतस्य श्रावकाः ।

1 A अज्ञ
2 C कारणम्
3 C संज्ञान वरेष
4 A पृच्छिहं
5 C लभ्यते
6 A अह्यु
7 A ०स्खलिरु०
8 C निरुद्ध कोलिता; Tib. 81a, l. 2: མོ་དྒལ་བུ །

नैव[1] तेष इह ज्ञानु वर्तते
बुद्धगोचरु अ[यं निरुत्तरः ॥६३॥
सर्व धर्म वशि पार]मिं गताः
सर्व शिक्ष-चरियाय[2] उद्गताः ।
संजनेत्व[3] करुणां विनायका
मुञ्च घोष परमार्थकोविदाः ॥६४॥
येऽपि पूर्व बहुकल्पको[टियो[4]
एव चिन्ति द्विपदेन्द्रु पृच्छितः] ।
भष्यमग्रु[5] शरणं परायणं
तेष अद्य फल ब्रूहि नायकाः ॥६५॥
यक्षराक्षसकुंभाण्डगुह्यकाः
प्रेक्षमाण द्विप[दानमुत्तमम् ।
सर्वि प्राञ्जलिस्थिताः सगौरवाः
श्रोतु व्याकरण]मग्रपुद्गलान्[6] ॥६६॥
बोधिसत्त्व बहवोऽद्य आगता
ऋद्धिमन्त बहुक्षेत्रकोटिभिः ।
ज्येष्ठ[[7]पुत्र सुगतस्य औरसाः
सर्वि प्राञ्जलि]स्थिताः सगौरवाः ॥६७॥

1 C नैष 2 A ०चर्याय 3 C संजनेतु
4 A येहि बहुकल्प० 5 A भष्यअग्र ; C तस्यमग्र
6 C मग्रमुद्गमान् ; Tib. 81a, l. 5: གང་ཟག་ཆེན་པོས་ལུང་བསྟན་ཅན་པའི་ཕྱིར། 7 C दृष्ट

गन्धहस्ति पुरिमादिशा[1][ग]तोऽ-
क्षोभ्य क्षेत्र दिशि लोकविश्रुतः[2] ।
बोधिसत्त्वनयुतैः पुरस्कृतः
[शाक्यसिंहु द्विपदेन्द्रु पृच्छना ॥६८॥
सुखा]वतीय वरलोकधातुतो
महास्थामप्राप्त अवलोकितेश्वरः ।
बोधिसत्त्वनयुतैः पुरस्कृतः[3]
शाक्यसिंहु द्विपदेन्द्रु पृच्छना[4] ॥६९॥
[येन पूर्व बहुकल्पकोटियो
अ]प्रमेय सुगता उपस्थिताः ।
सागराण सकला च वालिका
एषता परम ज्ञानमुत्तमम्[5] ॥७०॥
सर्वबुद्ध स्तुत[6] संप्रशंसितः
सर्वधर्मगुण[पारमिं गतः] ।
सर्वलोक दिशतासु विश्रुतो[7]
मञ्जुघोष स्थितु प्राञ्जलीकृतः ॥७१॥
बुद्धक्षेत्र नियुतैश्चरित्वना
सुदुर्लभमीदृशकान[8] दर्शनम् ।
बुद्धपुत्र गु[णवत् सुशि]क्षिताः
सर्वि प्राञ्जलिस्थिताः सगौरवाः ॥७२॥

1 C दिशु 2 C विश्रुतान् 3 A drops this line 4 C °न्द्र प्रच्छना
5 A कर्मज्ञानमु° 6 C भुत 7 C अवि° 8 A सुदुर्लभम् ईदृशान

नास्ति अन्य इह कश्चि भाजनम्
एवरूपि यथ एत सूरताः[1] ।
धर्मकोषधर[2] सर्वशास्तुनां
स्निग्धवाच[3] गिर मुञ्च नायकाः ॥७३॥
न ह्यकारणक जिना विनायका
दर्शयन्ति[4] स्मितमग्रपुद्गलाः ।
मुञ्च घोष वर दुन्दुभिस्वर
कस्य अर्थि स्मितु एतु[5] दर्शितम् ॥७४॥
हंसकोकिलमयूरसारसा
मेघनाद वृषभाः प्रगर्जिताः ।
दिव्यवाद्यमधुराः प्रवादिता
व्याकरोहि[6] गिर सत्त्वमोचनी ॥७५॥
मैत्रसंजननि प्रेमवर्धनी[7]
ज्ञानदर्शनि अविद्यरिञ्चनी[8] ।
अर्थतीरणि प्रज्ञाविवर्धनी[9]
कल्पकोटिनियुता[10] विशोधनी ॥७६॥

1 A & C एति सूरता 2 C धर्मकैशधर 3 C °भाव

4 A °कारुणिको जिनो विनायको दर्शन्ति ; Tib. 81b, l. 6: འདྲེན་པ་འཇམ་པའི་དབྱངས་སུ་བརྗོད་པ་ གསུངས །

5 C स्मितमेतु 6 C °करोमि

7 C प्रीति° 8 A रञ्जिनी ; Tib. 82a, l. 1: མ་རིག་སེལ་བ།

9 A अध्वनि तीरणिप्रवर्धनी 10 C °नयुतान्

विनिश्चित[1] भाव विभावित
दुःख निरोध पदार्थ निदर्शनी ।
सर्व कुतीर्थक[2] वादध्वंसनी
शून्य निसत्त्व निजीव विभावनि ॥७७॥

पुण्यसहस्रशतेहि[3] अलङ्कृतः
बुद्धसहस्रशतेहि चरित्विह[4] ।
देवसहस्रशतेहि[5] सुसंस्तुतः
ब्रह्मसहस्रशतेहि[6] नम[स्कृतः] ॥७८॥

राक्षसयक्षकुंभाण्डप्रसादनि
नागसुपर्णमहोरगमोचनि ।
नित्यमसक्त[7]-प्रयुक्त-उदीरणि[8]
कर्मफलेहि शुभेहि[9] समु[द्गतः ॥७९॥

ये च के]चि जिनाः[10] परिनिर्वृता
ये च अनागत ये च अवस्थिताः ।
सर्वि प्रजानसि संगु न तेऽस्तीति[11]
सर्वगुणेहि[12] [समुद्गत नायक ॥८०॥

1 A विज्ञनिश्चित
2 A कुतीर्थ
3 A ०शतेभि
4 C बुद्धशतसहस्रसुचरित्विहि
5 A ०भि
6 A ०भि
7 A ०प्रसक्त०
8 C उदीरित
9 A ०भि शुभेभि
10 C ०च्चि जीविता
11 A संगर चास्तीति; C सङ्गु न च स्थिति; Tib. 82a, l. 7: ཐོགས་མི་མངའ།
12 A ०भि

भूतधरा] ससमुद्रपर्वत

सर्वि मही षड्विकार[1] प्रकम्पिता ।

देवगणा नभि पुष्प क्षिपन्ति च

दिव्यु प्रवायति गन्धु मनो[रमु ॥८१॥

हत रागदोषतिमिरा निखि]ला

परिशुद्धशील परिशुद्धमनाः ।

प्रशान्त शून्य अनिमित्तरता[2]

नद सिंहनादु नद कारुणिकाः[3] ॥८२॥

प्रति[4][भानवन्त सुविशालयशा

सुसमाप्त]प्रज्ञ तथज्ञान जिनाः[5] ।

तव लोकि नास्ति[6] समु कारुणिका

भण कस्य अर्थि स्मितु दर्शयसे ॥८३॥

कलविङ्क[कोकिलमयूररवा-

स्तथ जीवञ्जीवक]मनोज्ञरुताः ।

रञ्जनीय शब्दु भुवि एकक्षणे[7]

कल ते न[8] भोन्ति सुगतस्य स्वरे ॥८४॥

भेर्यो मृदङ्गपणवाश्च [तथा

शङ्ख सवेणु तथ वल्लरियो] ।

1 C सर्विकार 2 Tib. 82b, l. 2: དགྲོས

3 A नद सिंहनाद वरकारुणिका ; C नरसिंहनादु नदकारुका: 4 C प्रवि

5 Tib. 82b, l. 2-3: རྒྱལ་བའི་ཤེས་རབ་རྫོགས་ཤིང་ཡེ་ཤེས་རྫོགས། ।

6 A न तवास्ति लोकि 7 C रजनीय शब्द भव एकक्षणे 8 C कलवेन

तूर्यासहस्र सिय एकरवाः
कल नानुभोन्ति सुगतस्य रुते ॥८५॥
तूर्यसहस्र वर दिव्यरुता
रञ्जनीय गी]त सिय अप्सरसाम् ।
सुगीति] शब्दरति संजने[1]
कल न भोन्ति[2] [सुगतस्य रुते] ॥८६॥
एकस्वरा तु तव[3] लोकहिता
नानाधिमुक्ति स्वरु निश्चरति[4] ।
एकैकु मन्यि मम भाषि जिनो
[ब्रूहि स्मितं त कु]तु कस्य कृते ॥८७॥
देवान शब्द तथ नागरुता
ये चापि किन्नररुता मधुराः ।
प्रशमेन्ति क्लेश न कदाचिदपि
बुद्धस्वरास्तु सद [क्लेशनुदाः] ॥८८॥
प्रीतिं जनेति न च रागरतिं
मैत्रीं जनेति न च दोषमतिम् ।
प्रज्ञां जनेति न च मोहरतिं
बुद्धान[5] सर्व मलनाशि स्वरः ॥८९॥

1 C संजनाना 2 A नानुभोन्ति 3 C भूतव
4 A निश्चरी 5 A बुद्धज्ञाने

न बहि च शब्दु परिषातु प्रजा[1]
सर्वेष छिन्दति स काङ्क्षशतान्[2] ।
न च ओनतो नहि च औन्नमतो
समसौख्यदर्शन स्वरो मुनिनः[3] ॥९०॥
भञ्याद्दियं मही सशैलरणा
क्षीयते[4] सागरजलञ्च तथा ।
चन्द्रोऽथ सूर्यु धरणीं प्रपतेद्
गिरमन्यथा न पुन भाषि जिनः ॥९१॥
सर्वाङ्ग वाक्य परिशुद्ध गिरा
सिंहस्वरा मधुर मञ्जुगिरा ।
ब्रह्मस्वरा सुगत कारुणिका
भण कस्य अर्थि स्मितु दर्शयसे ॥९२॥
यावन्त सत्त्व[5] इह सर्व जगे
सर्वेष चित्त[6] चरते कुशलः ।
ये अतीत नागत ये सांप्रतिका
भण कस्य अर्थि स्मितु दर्शयसे ॥९३॥

1 A बहिर्द्धु शब्द पश्यति व्रजी ; Tib. 83b, l. 2: འཁོར་ལས་སྐད་རོལ་ཏུ་ནི་སྒྲ་འབྱུང་། 2 A सकाङ्क्षणताम्
3 A न च जानतो न्यपि उन्नमती मसौख्यु दर्शनु स्वनो मुनिनो
4 C भोज्ये दिशं महि सशैलक्षण क्षीयेते
5 A याचन्त सर्वे 6 C सर्वे सचिन्त

यावन्त[1] केचिज्जिन कारुणिका
ज्ञानस्मि सर्वि वशि पार[मिं] गताः ।
न च ते जिना विमलचन्द्रमुखा
नाहेतुकं स्मितु[2] [सद् दर्शयसे] ॥९४॥
अपि कल्पकोटि[3] भणि अप्रतिमा
यथ गङ्गवालिक भणेय्य गुणान् ।
न च शक्यु कीर्तितु प्रमाण गुणे
भण कस्य अर्थि स्मितु दर्शयसे ॥९५॥

[ इति श्रीसमाधिराजे स्मितसन्दर्शनपरिवर्तश्चतुर्दशः ॥१४॥ ]

1 A याचन्त
2 C अहेतुकं स्मित करो
3 C सविकल्प०

## पञ्चदशपरिवर्तः

अथ खलु भगवांस्तस्यां वेलायां मैत्रेयं[1] बोधिसत्त्वं महासत्त्वमाभिः[2] स्वारूप्याभिर्गाथाभिः प्रत्यभाषत ।

चन्द्रप्रभो एष कुमारभूतः
[संस्तुत्य बुद्धमतुलीय प्रीतिया] ।
भाषित्व बुद्धान विशिष्ट वर्णं[3]
[प्र]शंसनीयः सद कालि भेष्यति ॥१॥

इहैव चो राजगृहस्मि पूर्वं
दृष्टैव बुद्धान सहस्रकोटयः[4] ।
स[र्वेष चानेन जिनान अन्तिके
अयं वरः शा]न्तसमाधि पृच्छितः[5] ॥२॥

सर्वत्र चो एष[6] ममासि[7] पुत्रो
इमां चरन्तो[8] वरबोधिचारिकाम् ।
सर्वत्र चासीत् प्रतिभानवन्तः
स[र्वत्र चासीत् सद ब्रह्मचारी ॥३॥

स पश्चिमे] कालि महाभयानके
त्वमेव साक्षी अजिता ममात्र[9] ।

1 A भगवान् मै० 2 A ०हासत्त्वं तस्यां वेलायामाभिः

3 C विशीस्व वर्णं 4 C ०स्रकोट्यः 5 C पृच्छतः

6 Tib. 83a, l. 5 : འདི་ཉི=इह

7 A ममास्ति 8 C इमावन्तो 9 C अजिनाममात्रः

स्थिहित्व शुद्धे सद[1] ब्रह्मचर्ये
वैस्तारिक एष[2] समा[धि काहिते ॥४॥
समाधिमेषन्तु इदं] प्रणीतम्
एतेन मार्गेण स बोधि[3] लप्स्यते ।
परिगृहीतो बहु[4] बुद्धकोटिभिः
पूजां वरां काहिति नायकानाम् ॥५॥
[ज्ञाने स्थिहित्वा अहु व्याकरोमि
चन्द्र]प्रभस्याचरितं विशिष्टम्[5] ।
न पश्च[6] कालेऽस्य भवेऽन्तरायो[7]
न ब्रह्मचर्यस्य न जीवितस्य ॥६॥
हस्ते यथा आमलका[नि पश्च
प्रजानाति बुद्धसहस्र]कोटयः[8] ।
तदुत्तरे यात्तिक[9] गङ्गवालिका
अनागता येष्विय पूजना होति[10] ॥७॥
देवान नागान अशीतिकोटयः
[यक्षाण चो कोटिसहस्रस]प्ततिः ।
औत्सुक्यमेषन्ति[11] य पश्च काले
पूजां करोन्ता[12] द्विपदोत्तमानाम् ॥८॥

1 C बुद्धे तद 2 A ०कं एतु 3 C समाधि 4 C ०गृहीतबहु० 5 C विशिष्यम्
6 A न च प० 7 A भवेन्नरुयो 8 C ०कोट्यः
9 C यान्तक 10 C येषु यु पूजनाहिति
11 C मे सन्ति 12 A पूजास्य कुर्वन्

स पूज कृत्वा द्विपदान उत्तमान्
समुदाचरि ज्ञानमिमं निरुत्तरम् ।
स पश्चिमे चोच्छ्रयि[1] लोकनाथो
विमलप्रभो नाम जिनो भविष्यति[2] ॥९॥

इदं स्वकं व्याकरणं श्रुणित्वा
प्री[तिस्फुटो[3] आ]सि[4] कुमारभूतः ।
चन्द्रप्रभो उद्गत सप्त ताल[5]
उदानदानेति नभे स्थिहित्वा ॥१०॥

अहो जिना उत्तमधर्मदेशका
विमुक्तिज्ञानाधिपतीब[ले स्थिताः] ।
सुनिश्चिते उत्तम ज्ञानि तिष्ठसि[6]
अनाभिभूतोऽसि परप्रवादिभिः ॥११॥

विवर्जिता सङ्ग विमुक्ति स्पर्शिता[7]
[8]विभावितं वस्तु भवे न सज्जसि ।

1 Tib. 84a, l. 4: ཕྱི་དུས་ལུས་ལ་དེ་ནི་འཇིག་རྟེན་མགོན །

2 C drops stanza 9. 3 C श्रणीत्व नाप्री 4 A ०सी

5 A चन्द्रप्रभो उत्तमज्ञानिमिष्टमे

6 Ms. A drops the last line of stanza 10 and the first three lines of stanza 11.

7 Ms. B as also the printed edition of the B. T. society drop the leaves up to this word. See above, p. 171 fn. 10.

8 Tib. 84a, l. 7: དངོས་པོ་རྣམ་བཞིག་སྲིད་པར་ཆགས་མི་མཛད །

प्र[पञ्च सर्वे स]कला न भोन्ति[1] ते
असंगज्ञानं विभवेऽभिवर्तते[2] ॥१२॥
सर्वप्रपञ्चेभिरनोपलिप्ता
दृष्टिः प्रपञ्चाः सकलाः प्रहीणाः ।
सुभाविते मार्ग [निकेतु नास्ति
अ]नाभिभूता[3] अविरुद्ध[4] केनचित्[5] ॥१३॥
निकेतु त्रैधातुकि नास्ति तुभ्यम्
ओघाश्च ग्रन्थाश्च प्रहीण सर्वे ।
तृष्णालताबन्धन सर्वि[6] छिन्ना
भव[7] [प्रहीणो भ]व सन्धि[8] नास्ति ॥१४॥
स्वभावु धर्माणमभावु जानसे[9]
अनाभिलप्या गिर संप्रभाषसे[10] ।
सिंहेन वा क्रोष्टुक तीर्थ नाशिता[11]
ये ते [वि]पर्यास स्थिता अविद्वसु ॥१५॥
[निधान श्रेष्ठं मयि लब्धमद्य]
धर्मं[12] निधानं[13] सुगतेन देशितम्[14] ।

1 C कला न सन्ति  2 C असङ्गज्ञानी विभवेतिवर्तते
3 B अनाभिहो  4 A अनिरुद्धु  5 A & B केचित्
6 A सन्धि  7 A प्रेम  8 B सर्वि
9 C धर्मान सदा प्रजानसे  10 C अनाभिलभ्यां गिर सर्वि बुध्यसे
11 A क्रोष्टुक नास्तितान् ; B क्रोष्टुकवीथि नाशिता
12 A सर्वं  13 B विधानं  14 B सूत्रेण दर्शितम्

प्रहीण सर्वा विनिपातदुर्गति
काङ्क्षा न मेहास्ति भविष्य नायकः ॥१६॥
मूर्धस्मि पाणिं प्रति[स्थापयित्वा
सुवर्णवर्णं रुचिरं] प्रभास्वरम् ।
अभिषिञ्च बोधाय नरर्षभस्तं[1]
सदेवकं लोक स्थपेत्व साक्षिणम् ॥१७॥

[इति श्रीसमाधिराजे[2] स्मितव्याकरणपरिवर्तो नाम पञ्चदशः[3]] ॥१५॥

1 B वा ये नरसहस्र ; C अभिसिं रि पोधाय नर०

2 B drops इति श्रीसमाधिराजे

3 B नाम पञ्चदशमः

# षोड़शपरिवर्तः

[1]स्मरामि पूर्वं चरमाणु चारि[कां
सिंहध्वजस्य सुगतस्य] शासने ।
अभूषि भिक्षु विदु[2] धर्मभाणको
नामेन सो उच्यति ब्रह्मदत्तः ॥१॥
अहं तदासीन्मति[3]राजपुत्रो
आबाधिको बा[ढ गिलान दुःखितः ।
मह्यं च सो आ]चरियो[4] अभूषि
यो ब्रह्मदत्तस्तद धर्मभाणकः ॥२॥
पंचोत्तरा वैद्यशता[5] अनूनका
व्याधिं चिकित्सन्ति उद्युक्तमान[साः ।

1 A, B & Tib. adds by way of introduction the following lines :—
तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म । तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वान् सर्वभवदुःखेभ्यो मोचयितुकामेनार्ये चानुत्तरे समाधिप्रीतिसुखे सत्त्वान् प्रतिष्ठापयितुकामेनायं सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजस्तेन श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यः धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः स्वाध्यातव्यः अरणाभावनया भावयितव्यो बहुलीकर्तव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । तत् कस्य हेतोः । सर्वापायातिक्रमको हि कुमारायं सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजः सर्वव्याधिप्रमोचकश्च । यथा च कुमार बोधिसत्त्वेन महासत्त्वेनायं सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजः श्रुतो भवत्युद्गृहीतो भवति च तदायं कुमार बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानां सर्वभवदुःखेभ्यो मोचयित्वा आर्ये चानुत्तरे समाधिप्रीतिसुखे सत्त्वान् प्रतिष्ठापयति । क्षिप्रं चेमं समाधिं प्रतिलभते क्षिप्रञ्चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते । अथ खलु भगवान् तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य एतमेवार्थमुद्द्योत्य गाथाभिर्गीतेन इमं पूर्वयोगकथानिर्देशं संप्रकाशयति स्म ।

2 C विद     3 A अहं च आसीन्महि० ; B अहं च आसी सती०

4 A आचरिदो ; B drops यो     5 A पञ्च ममा वैद्यशता ; C पंचोत्तरहा वैद्य०

व्याधिं न शक्नन्ति मम चिकित्सितुं]

सर्वे मम ज्ञातय[1] आसि दुःखिताः ॥३॥

श्रुत्वा च गैलान्यु स मह्य भिक्षु

गिलान पृच्छो[2] मम अन्तिकाग[तः] ।

[कृपां जनेत्वा मम ब्रह्मदत्तो

इमं स]माधिं वरु[3] तत्र देशयी ॥४॥

तस्य ममा[4] एतु समाधि श्रुत्वा

उत्पन्न प्रीति अरिया निरामिषा ।

स्वभावु धर्मा[ण प्रजानमानो

उच्छ्वासि[5] व्याधी तुहु] तस्मि काले ॥५॥

दीपंकरः सो[6] चरमाणु चारिका-

मभूषि भिक्षुर्विदु धर्मभाणकः ।

अहं च आसीन्मतिराजपुत्रः[7]

समाधि[ज्ञानेन हि[8] व्याधि मोचितः ॥६॥

तस्मात् कुमा]रा तुहु पश्च काले[9]

अनुस्मरन्तो इमु पारिहाणिम्[10] ।

सहेसि बालान दुरुक्त वाक्यं[11]

धारेन्तु वाचेन्तु इमं समाधिम् ॥७॥

1 C ज्ञातिक
2 B पुच्छो
3 B कुरु
4 B तस्मा ममा
5 A उत्थासि
6 C drops सो
7 C आसीत्पति रा०
8 B & C हु
9 C बहु पश्च काले
10 A ०हारिम्
11 B बाला तह्न कुवाक्यं

भेष्यन्ति भिक्षु [बहु पश्च काले]
लुब्धाश्च[1] दुष्टाश्च असंयताश्च ।
पापेच्छ अध्योषित[2] पात्रचीवरे
प्रतिक्षिपिष्यन्ति इमं समाधिम् ॥८॥
ईर्ष्यालुका[3] उद्धतप्रा[कटेन्द्रियाः][4]
कुलेषु[5] चाध्योषित[6] लाभकामाः ।
प्रायोगिके संस्तवि[7] नित्य संश्रिताः
प्रतिक्षिपिष्यन्ति इमं समाधिम् ॥९॥
हस्तांश्च पादांश्च त[थ] विद्यमाना[8]
हास्ये च लास्ये[9] च सदा प्रयुक्ताः ।
परस्परं कण्ठित श्लिष्यमाणा[10]
ग्रामेषु चर्यापथि अन्यु भेष्यति[11] ॥१०॥
अयुक्तयोगानिमि भोन्ति लक्षणाः
पर कुमारीषु च नित्य ध्योषिताः[12] ।

1 B लब्धाश्च 2 B ध्योषित 3 C ईर्ष्यामुक्ता
4 Tib. 86a, l. 3 : རྒོད་ཅིང་དབང་པོ་གཡེངས་པ་ལྷག་དོག་ཅན །
5 Tib. 86a, l. 4 : གྲོང་ལ་ཆགས་ཤིང །
6 B ईर्ष्यालुकादुद्धतप्राकटेन्द्रियाः कुलेषु चाध्योषित० ; C कुले अवाध्योषित
7 A प्रस्तवि ; C प्रयोगिते सं० 8 B हस्ताश्च पादास्तथ विद्यमाना
9 B drops च लास्ये 10 A कुण्डित or कुण्ठित ; C कण्डिते श्लीष्यमाणा
11 B चर्यापथ अभ्युपे० Tib. 86a, l. 5 : གཞན་དུ་སྤྱོད་པར་བྱེད ।
12 A ध्याषिताः

रूपेण रक्ता[1] ग्रथिता भवन्ति
हिण्डन्ति[2] ग्रामान्निगमांश्च राष्ट्रान् ॥११॥
ते खाद्यपेयस्मि सदा प्रयुक्ता
नाट्ये च गीते च तथैव वादिते ।
क्रयविक्रये चो सद[3] भोन्ति उत्सुकाः
पानेऽपि चाध्योषित नष्टलज्जाः[4] ॥१२॥
लेखान पिष्यन्ति[5] अयुक्तयोगाः
शीलं तथेर्यापथु[6] छोरयित्वा ।
मर्याद भिन्दित्व गृहीभि[7] सार्धं
ते भिन्नवृत्ता वितथ प्रतिष्ठिताः ॥१३॥
ये कर्म बुद्धेहि सदा विवर्जिता-
स्तुल मान कूटे च सदा प्रयुक्ताः ।
तत्कर्म कृत्वान किलिष्ट पापकान्[8]
अपायु यास्यन्ति निहीनकर्माः ॥१४॥
प्रभूत वित्तं[9] मणि हेम शंखं
गृहांश्च[10] ज्ञातींश्च विहाय प्रव्रजि ।

1 A मत्ता ; B सन्तो ; C अक्ता 2 B हिंसन्ति ; C मुह्यन्ति

3 A चोत्सद ; B चोत्सव 4 A ॰संज्ञाः ; B पानेषु चाव्योषित तेषु लज्जाः

5 A लेखान्नशिष्यन्ति ; Tib. 86b, l. 1: སྤྲིང་ཡིག་སྐུར་བར་བྱེད །

6 C तथैर्यापति 7 C गृहीणि

8 C किलिस पाकान् ; Tib. 86b, l. 2 : དེ་འདྲའི་སྡིག་པ་ཉོན་མོངས་ལས་བྱས་པས །

9 B प्रभुचित्तं 10 C गृहं च

ते प्रव्रजित्वानिह्[1] बुद्ध[शासने[2]
पापा]नि कर्माणि सदा[3] चरन्ति ॥१५॥
धने च धान्ये च ते[4] सारसंज्ञिनो
धेनुश्च गावः[5] शकटानि सज्जयी ।
किमर्थ ते[हि इम केश छोरिता
शिक्षाय] येषां प्रतिपत्ति नास्ति ॥१६॥
मया च पूर्वे चरियां[6] चरित्वा
सुदुष्करं कल्पसहस्र चीर्णम्[7] ।
अयं च[8] मे शान्त स[माधिरेषितो[9]
यत्तेष श्रुत्वा तद हा]स्यु[10] भेष्यति ॥१७॥
चिरं मृषावादि अब्रह्मचारिणो
अपायनिम्नाः[11] सद लाभकामाः[12] ।
ते ब्रह्मचारीण ध्वजं [गृहीत्वा[13]
दुःशील वक्ष्यन्ति न एष धर्मः] ॥१८॥
भेदाय स्थास्यन्ति च ते परस्परम्
अयुक्तिभिर्लाभ गवेषमाणाः ।

1 B ०जित्वा इह 2 B मानसं 3 A & B समा०
4 A भूत० 5 A वैतैश्च गावः ; B धान्ये च तथा रमङ्गितो वेणुश्च ग्रावः ; C गावा
6 B drops चरियां 7 B प्रकीर्णम् 8 C इयञ्च
9 A अयं च तेषां न समाधि देशिते 10 B दास्यु 11 B ०निष्ठाः
12 A लाभकामकाः 13 B ०चारिण चरित्व तं गृ०

अवर्ण भाषित्व त[1] अन्य[मन्यं
च्युता गमिष्यन्ति अपायभूमिम्[2] ] ॥१९॥
शतःसहस्रेषु[3] सुदुर्लभास्ते
क्षान्ती बलं येषु तदा भविष्यति ।
अतो बहू ये कलहस्मि उत्सुकाः
[प्रपञ्च काहिन्ति जहित्व क्षान्तिम्] ॥२०॥
वक्ष्यन्ति वाचा वय[4] बोधिसत्त्वाः
शब्दोऽपि तेषां व्रजि देशदेशे[5] ।
अभूतशब्देन मदेन मत्ता[6]
विपन्नशीलान कुतोऽस्ति बो[धिः[7] ॥२१॥
न मे श्रुतं नापि कदाचि दृष्ट]-
मध्याशयो यस्य विशुद्ध नास्ति ।
इमेषु धर्मेषु च नास्ति [क्षान्तिः]
स लप्स्यते[8] बोधि क्षिपित्व धर्मान्[9] ॥२२॥
भीताश्च त्रस्ताश्च [गृहं त्यजन्ति
ते प्रव्रजि दृ]ढतरा[10] भवन्ति ।

1 A च 2 B ०र्लाभगवेषमाणाः अपायभूमिम् ; Tib. 86b, l. 7 : ཤི་འཕོས་ནས་ནི་ངན་སོང་སར་ཡང་འགྲོ། 3 A स्वतः स० ; B शतसहस्रमेषु

4 B वाचार्थय 5 B सच्यपि तेषां व्रजि देशदेशे ; C प्रजा देशे ; Tib. 87a, l. 2 : དེ་ཡི་སྒྲ་ཡང་ཕྱོགས་དང་ཕྱོགས་སུ་འགྲོ། 6 B मदे समन्ता

7 C ०स्मि पो० 8 A प्रतिलप्स्यते ; B धर्मेषु वास्ति द्वान्ति प्रतिलप्स्यते

9 C धर्माः 10 A गाढतरा

विशेषकामा विलयं प्रयान्ति[1]
क्षिपित्व यानं[2] पुरुषोत्तमानाम् ॥२३॥
निहीनप्रज्ञा गुणविप्रहीना[3]
वक्ष्यन्ति दोषं सद अग्रयाने ।
यस्मै च ते तच्छरणं प्रपन्ना-
स्तत्रैव[4] ते दोष शतान् वदन्ति[5] ॥२४॥
आजीवका[6] ये बहु प्रव्रजित्वा
[अ]नर्थिकाः सर्वसुबुद्धबोधये[7] ।
ते आत्मदृष्टीय[8] स्थिहित्व बाला
उत्त्रस्त[9] भेष्यन्ति श्रुणित्व[10] शून्यताम् ॥२५॥
विहारु कृत्वान त अन्यमन्यं[11]
व्यापाददोषांश्च खिलं जनेत्वा[12] ।
अभ्याख्य[13] दत्त्वा च परस्परेण
लप्स्यन्ति प्रामोद्य करित्व पापकम्[14] ॥२६॥
य शीलवन्तो गुणवन्तु भेष्यति
मैत्रीविहारी[15] सद क्षान्तिकोविदः ।

1 A & B व्रजन्ति 2 B च्छिपित्व यानं 3 B गुणविही०
4 A यस्यैव ते तच्छरणं प्रपन्नास्तस्यैव 5 C drops it stanza 24.
6 C आजीविका 7 C शुबुद्धशोधये 8 B त आदृष्टिय
9 B त्रस्ता 10 C श्रणीतु 11 A & B विवाद कृत्वान त अन्यमन्यं ; C विचारु कृ०
12 A दोषं सखिलं जनित्वा ; B ०दोषां सुखिलं जनित्वा ; C जनेभ्वः
13 B अन्याख्तु ; C अस्याख्य ; Tib. 87a, l. 7: སྐུར་པ་མཐོང་འདེབ་ལ །
14 A पापान् ; B यायां 15 C मैत्राविहारी

सुसंवृतो[1] मार्दवसूरतश्च
परिभूत[2] सो भेष्यति तस्मि काले ॥२७॥
यो खो[3] पुनर्भेष्यति दुष्टचित्तः
सुदारुणो रौद्र ति[4] हीनकर्मा[5] ।
अधर्मचारी कलहे रतश्च
स पूजितो भेष्यति तस्मि काले ॥२८॥
आरोचयामि प्रतिवेदयामि
सचेत्[6] कुमारा मम श्रद्ध गच्छसि ।
इमां स्मरित्वा सुगतानुशासनीं
न जातु[7] विश्वस्तु भवेसि तेषाम् ॥२९॥
ते तीव्ररागास्तथ तीव्रदोषा-
स्ते तीव्रमोहा सद[8]मानमत्ताः ।
अदान्तकायाश्च अदान्तवाचः
अदान्तचित्ताश्च अपायनिम्नाः[9] ॥३०॥

1 C असंवृतो 2 B परिभुक्त 3 A योख्यो ; B ध्याख्यो 4 B रौदुति
5 A रौद्रविही० 6 A ०मि चो सचेत् ; B ०मि वो स चेत्
7 A ०नीं मा जातु ; C ०सनीमाजातु ; Tib. 87b, l. 3 : དེ་དག་ལ་ནི་ནམ་ཡང་ཡིད་མི་རྟོན །
8 A सद ; B ते वीतरागास्तथ तीव्रदोषास्ते तीव्रमोहाः सद
9 B अपापनिम्नाः ; C ०श्च अदान्तचित्ता अदान्तवाचश्च अ०

अहं च भाषेय्य[1] गुणान वर्णान्
न चो गुणान् भिक्षु समाचरेय्या[2]।
न घोषमात्रेण च बोधि लभ्यते[3]
प्रतिपत्तिसाराण न बोधि दुर्लभा[4] ॥३१॥

[इति श्रीसमाधिराजे[5] पूर्वयोगपरिवर्तो नाम षोड़शः[6]] ॥१६॥

1 C भाष्येय
2 B भिक्षु समाधि सेव्या
3 A & B लप्स्यते
4 C ०साराहन बोधि दुर्लभा
5 B drops इति श्रीसमाधिराजे
6 B षोडशमः